ते २ कालरूपं कलयतां कालकाले ऽकारण । कालादतीत कालस्थ कालकाल नमोऽस्तु ते ॥३॥ गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥४॥ ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावे च तत्पर । ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोऽस्तु ते ॥५॥ इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः । दीनवत्साश्रुनेत्रश्च पुलकांचितविग्रहः ॥६॥ असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । वर्षमेकं हवि

ष्याशी शङ्करस्य महात्मनः ॥७॥ स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम्। भवद्धनाढ्योऽदुःखी च मूको भवति पण्डितः ॥८॥ अभार्यो लभते भार्यां सुशीलां च पतिव्रताम्। इह लोके सुखं भुक्त्वा यात्यन्ते शिवसन्निधिम् ॥९॥ इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे। प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥१०॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे असितकृतं शिवस्तोत्रं सम्पूर्णं ॥

## हिमालयकृत शिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ हिमाचल उ० त्वं ब्रह्मा सृष्टिकर्ता च त्वं विष्णुः परिपालकः । त्वं शिवःशिवदोऽनंतः सर्वसंहारकारकः॥ १ ॥ त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः । प्राकृतःप्रकृतीशश्च प्राकृतः प्रकृतः परः ॥२॥ नानारूप विधाता त्वं भक्तानां ध्यानहेतवे । येषु रूपेषु यत्प्रीतिस्तत्तद्रूपं बिभर्षि च ॥३॥ सूर्यस्त्वं सृष्टिजनकं आधारःसर्वतेजसाम् । सोमस्त्वं सस्यपाता च स

ततं शीतरश्मिना ॥४॥ वायुस्त्वं वरुणस्त्वं च विद्वांश्च विदुषां गुरुः । मृत्युञ्जयो मृत्यु मृत्युः कालकालो यमान्तकः ॥५॥ वेदस्त्वं वेदकर्ता च वेदवेदांगपारगः । विदुषां जनकस्त्वं च विद्वांश्च विदुषां गुरुः ॥६॥ मन्त्रस्त्वं हि जपस्त्वंहि तपस्त्वं तत्फलप्रदः॥वाक्त्वं रागाधिदेवस्त्वं तत्कर्ता तद्गुरुः स्वयम् ॥ ॥७॥ अहो सरस्वतीबीजं कस्त्वां स्तोतुमिहेश्वरः । इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम्॥८॥

तत्रोवास तमाबोध्य चावरुह्य वृषा
च्छिवः । स्तोत्रमेतन्महापुण्यं त्रि
सन्ध्यं यः पठेन्नरः ॥९॥ मुच्यते स
र्वपापेभ्यो भयेभ्यश्च भवार्णवे । अ
पुत्रोलभते पुत्रं मासमेकं पठेद्यपि
॥१०॥ भार्याहीनो लभेद्भार्यां सुशी
लां सुमनोहराम् । चिरकालगतं व
स्तु लभते सहसा ध्रुवम् ॥११॥ रा
ज्यभ्रष्टो लभेद्राज्यं शंकरस्य प्रसा
दतः । कारागारे श्मशाने च शत्रुग्र
स्तेऽतिसंकटे ॥१२॥ गम्भीरेऽतिज
लाकीर्णे भग्नपोते विषादने । रण

मध्ये महाभीते हिंस्रजन्तुसमन्वि ते । सर्वतो मुच्यते स्तुत्वा शंकर स्य प्रसादतः ॥१३॥ इति श्रीब्रह्म वैवर्ते महापुराणे श्रीकृष्णजन्मखंडे हिमालयकृतं श्रीशिवस्तोत्रं संपूर्णं ।

शिवाष्टक ।

श्रीगणेशाय नमः । प्रभुं प्राणना थं विभुं विश्वनाथं जगन्नाथनाथं स दानंदभाजम् । भवद्भव्यभूतेश्वरं भू तनाथं शिवं शंकरं शम्भुमीशानमी डे ॥१॥ गले रुण्डमालं तनौ सर्प जालं महाकालकालं गणेशाधिपा

लम् । जटाजूटगंगातरंगैर्विशालं शिवं शंकरं शम्भुमीशानमीडे ॥२॥ मुदामाकरं मण्डनं मण्डयन्तं महामण्डलं भस्मभूषाधरं तम् । अनादिं ह्यपारं महामोहमारं शिवं शंकरं शम्भुमीशानमीडे ॥३॥ तटाधोनिवासं महाट्टाट्टहासं महापापनाशं सदा सुप्रकाशं । गिरीशं गणेशं सुरेशं महेशं शिवं शंकरं शम्भुमीशानमीडे ॥४॥ गिरीन्द्रात्मजासंगृहीतार्धदेहं गिरौ संस्थितं सर्वदासन्नगेहं । परब्रह्म ब्रह्मादिभिर्वन्द्य

मानं शिवं शंकरं शम्भुमीशानमी
डे ॥५॥ कपालं त्रिशूलं कराभ्यां द
धानं पदाम्भोजनम्राय कामं ददानं
बलीवर्दयानं सुराणां प्रधानं शिवं शं
करं शम्भुमीशानमीडे ॥६॥ शरच्च
न्द्रगात्रं गणानन्दपात्रं त्रिनेत्रं पवि
त्रं धनेशस्य मित्रं । अपर्णाकलत्रं च
रित्रं विचित्रं शिवं शंकरं शम्भुमी
शानमीडे ॥७॥ हरं सर्पहारं चिता
भूविहारं भवं वेदसारं सदा निर्वि
कारं । श्मशाने वसन्तं मनोजं द
हन्तं शिवं शंकरं शम्भुमीशानमी

डे ॥८॥ स्तवं यः प्रभाते नरः शूल पाणेः पठेत्सर्वदा भार्गभावानुरक्तः सुपुत्रं धनं धान्य मित्रं कलत्रं विचित्रः समासाद्य मोक्षं प्रयाति ९॥

इति श्रीशिवाष्टकं सम्पूर्ण ॥

द्वादशज्योतिर्लिंगानि।

श्रीगणेशाय नमः। सौराष्ट्रे सोमनाथंच श्रीशैले मल्लिकार्जुनम्। उज्जयिन्यांमहाकाल मोङ्कारममलेश्वरम् ॥१॥ पर्यल्यां वैद्यनाथं च डाकिन्यां भीमशंकरम्। सेतुबन्धे तु रामेशं नागेशं दारुकावने ॥२॥ वा

राणस्यां तु विश्वेशं त्र्यम्बकं गौतमी तटे ॥ हिमालये तु केदारं घुसृणेशं शिवालये ॥३॥ एतानि ज्योतिर्लिङ्गानि सायं प्रातः पठेन्नरः । सप्त जन्मकृतं पापं स्मरणेन विनश्यति ॥४॥ इति द्वादशज्योतिर्लिंगानि कथितानि ॥

शिवाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः । शिवो महेश्वरः शंभुःपिनाकी शशिशेखरः । वामदेवो विरूपाक्षः कदर्पी नीललोहितः ॥१॥ शंकरःशूलपाणिश्चख

ट्वांगी विष्णुवल्लभः । शिपिविष्टों
बिकानाथः श्रीकण्ठो भक्तवत्सलः
॥२॥ भवःशर्वस्त्रिलोकेशःशितिकं
ठः शिवाप्रियः । उग्रः कपाली का
मारिरन्धकासुरसूदनः ॥३॥ गंगा
धरो ललाटाक्षः कालकालःकृपानि
धिः । भीमः परशुहस्तश्च मृगपा
णिर्जटाधरः ॥४॥ कैलाशवासी क
वची कठोरस्त्रिपुरान्तकः । वृषांको
वृषभारूढो भस्मोद्धूलितविग्रहः ॥
॥५॥सामप्रियःस्वरमयस्त्रयीमूर्त्ति
रनीश्वरः ।सर्वज्ञःपरमात्मा च सो

मसूर्याग्निलोचनः ॥६॥ हविर्यज्ञम
यः सोमः पंचवक्त्रःसदाशिवः । वि
श्वेश्वरोवीरभद्रो गणनाथः प्रजाप
तिः ॥७॥ हिरण्यरेता दुर्धर्षो गिरी
शो गिरिजाऽनघः । भुजंगभूषणो
भर्गो गिरिधन्वा गिरिप्रियः ॥ ८ ॥
कृत्तिवासाः पुरारातिर्भगवान् प्रम
थाधिपः । मृत्युंजयः सूक्ष्मतनुर्जग
द्व्यापीजगद्गुरुः ॥ ७॥ व्योमके
शो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिःस्थाणुरहिर्बुध्न्या दि
गम्बरः ॥१०॥अष्टमूर्तिरनेकात्मा

सात्विकः शुद्धविग्रहः । शाश्वतःखं डपरशुरजःपाशविमोचनः ॥ ११॥ मृडःपशुपतिर्देवो महादेवोऽव्ययो हरिः । पूषदंतभिदव्यग्रो दक्षाध्वर हरो हरः ॥ १२ ॥ भगनेत्रभिदव्य क्तः सहस्राक्षःसहस्रपात् । अपवर्ग प्रदोऽनंतस्तारकःपरमेश्वरः ॥१३॥ इति श्रीशिवाष्टोत्तरशतनामावली स्तोत्रं सम्पूर्णम् ॥

॥ अथ दारिद्र्यदहनस्तोत्र ॥

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय ।

कर्पूरकांति धवलाय जटाधराय दा
रिद्र्यदुःखदहनायनमःशिवाय १
गौरीप्रियायरजनीशकलाधरायका
लांतकायभुजगाधिपकंकणाय । गं
गाधराय गजराज विमर्दनाय दा०
॥ २ ॥ भक्तिप्रियाय भवरोगभयाप
हाय उग्राय दुर्गभवसागरतारणाय
ज्योतिर्मयाय गुणनामसुनृत्यकाय
दा० ॥३॥ चर्माम्बराय शवभस्म
विलेपनाय भालेक्षणाय मणिकुंडल
मंडिताय । मंजीरपादयुगलाय ज
टाधराय दा० ॥४॥ पंचाननाय फ



णिराज विभूषणाय हेमांशुकाय भु घनत्त्रयमंडिताय । आनंदभूमिवर दाय तमोमयाय दा०॥५॥ भानुप्रि याय भवसागर तारणाय कालांत काय कमलासनपूजिताय । नेत्रत्र याय शुभलक्षणलक्षितायदा०॥६॥ रामप्रियायरघुनाथवरप्रदाय नाम प्रियाय नरकार्णवतारणाय । पुण्ये षु पुण्यभरिताय सुरार्चिताय दा० ॥७॥ मुक्तेश्वराय फलदाय गणेश्व राय गीतप्रियाय वृषभेश्वरवाहना य ॥ मातङ्गचर्मवसनाय महेश्वरा

य दा० ॥८॥ वासिष्ठेन कृतं स्तोत्र सर्वरोगनिवारणम् । सर्वसम्पत्करं शीघ्रं पुत्रपौत्रादिवर्धनम् ॥९॥ त्रिसन्ध्यंयःपठेन्नित्यं स हि स्वर्गमवाप्नुयात् ॥१०॥ इति श्रीवसिष्ठविरचितं दारिद्र्यदहनस्तोत्रं संपूर्णं ॥

कल्किकृतशिवस्तोत्र ।

श्रीगणेशाय नमः । गौरीनाथं विश्वनाथंशरण्यं भूतावासं वासुकीकण्ठभूषम् । त्र्यक्षं पञ्चास्यादिदेवं पुराणं वन्दे सान्द्रानन्दसन्दोहदक्षं ॥१॥ योगाधीशं कामनाशं क

रालं गंगासंगक्लिन्नमूर्धानमीशं । ज
टाजूटाटोपनिक्षिप्तभावं महाकालं
चन्द्रभालं नमामि ॥२॥ श्मशान
स्थं भूतवेतालसंगं नानाशस्त्रैः ख
ड्गशूलादिभिश्च । व्याघ्रात्युग्रा
बाहवो लोकनाशे यस्य क्रोधोद्भूत
लोकोऽस्तमेति ॥३॥ यो भूतादिः
पञ्चभूतैः सिसृक्षुस्तन्मात्रात्मका
लकर्मस्वभावैः प्रहृत्येदं प्राप्य जी
वत्वमीशो ब्रह्मानन्दो रमते तं न
मामि ॥४॥ स्थितौ विष्णुः सर्वजि
ष्णुःसुरात्मा लोकान्साधून्धर्मसेतू

न्विभाति । ब्रह्माद्यंशो योऽभिमानी गुणात्मा शब्दाद्यंगैस्तं परेशं नमामि ॥५॥ यस्याज्ञया वायवो वान्ति लोके ज्वलत्यग्निः सविता याति तप्यन् । शीतांशुः खे तारकासंग्रहश्च प्रवर्तते तं परेशं प्रपद्ये ॥६॥ यस्य श्वासात्सर्वधात्री धरित्री देवो वर्षत्यम्बुकालः प्रमाता । मेरुर्मध्ये भुवनानां च भर्ता तमीशानं विश्वरूपं नमामि ॥७॥ इति श्रीकल्किपुराणे कल्किकृतं शिवस्तोत्रं सम्पूर्णम् ॥

॥ चतुःश्लोकी भागवतम् ।

श्रीगणेशायनमः । श्रीभगवानु० ॥
ज्ञानंपरमगुह्यं मे यद्विज्ञानसमन्वि
तं ॥ सरहस्यं तदंगंच गृहाण गदि
तंमया ॥ १ ॥ यावानहं यथाभावो
यद्रूपगुणकर्मकः । तथैव तत्त्व
विज्ञानमस्तु ते मदनुग्रहात् ॥२॥
अहमेवासमेवाग्रे नान्यद्यत्सदसत्
परं । पश्चादहं यदेतच्च योऽवशि
ष्येत सोऽस्म्यहं ॥३॥ ऋतेऽर्थं यत्
प्रतीयेत न प्रतीयेत चात्मनि । त
द्विद्यादात्मनोमायां यथाभासो य

थातम: ॥४॥ यथामहांति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्य प्रविष्टानि यथा तेषु न तेष्वहं ॥५॥ एतावदेवजिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा॥६॥ एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥७॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकी भा

गवतम् ॥

पांडवगीता ।

श्रीगणेशाय नमः । पांडव उवाच । प्रन्हादनारदपराशरपुण्डरीकव्यासांबरीष शुकशौनकभीष्मदाल्भ्यान् । रुक्मांगदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥१॥ लोमहर्षण उ० धर्मो विवर्धति युधिष्ठिरकीर्तनेनपापं प्रणश्यति वृकोदरकीर्तनेन । शत्रुर्विनश्यति धनंजयकीर्तनेन माद्रीसुतौ कथयतां न भवंति रोगाः

॥२॥ ब्रह्मोवाच । ये मानवा विगतरागपरावरज्ञा नारायणं सुरगुरुं सततं स्मरंति । ध्यानेन तेन हतकिल्बिषचेतनास्ते मातुः पयोधररसं न पुनःपिबंति ॥३॥ इंद्र उवाच । नारायणो नाम नरो नराणां प्रसिद्धचोरः कथितः पृथिव्याम् । अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मरतां सदैव ॥४॥ युधिष्ठिर उवाच । मेघश्यामं पीतकौशेयवासं श्रीवत्सांकं कौस्तुभोद्भासितांगं । पुण्योपेतं पुंडरीकायताक्षं विष्णुं वं

दे सर्वलोकैकनाथं ॥५॥ भीमसेन
उवाच । जलौघमग्ना सचराचरा
धरा विषाणकोट्याखिलविश्वमूर्ति
ना । समुद्धृता येन वराहरूपिणा
स मे स्वयंभूर्भगवान् प्रसीदतां६॥
अर्जुन उवाच । अचिंत्यमव्यक्तम
नंतमव्ययं विभुं प्रभुं भावितविश्व
भावनं । त्रैलोक्यविस्तारविचारका
रकं हरिं प्रपन्नोऽस्मि गतिं महा
त्मनाम् ॥७॥ नकुल उवाच । य
दि गमनमधस्तात्कालपाशान ब
द्धो यदि च कुलविहीने जायतेप

क्षिकीटे। कृमिशतमपि गत्वा जायते चांतरात्मा मम भवतु हृदिस्थे केशवे भक्तिरेका ॥८॥ सहदेव उवाच । तस्य यज्ञवराहस्य विष्णोरतुलतेजसः । प्रणामं ये प्रकुर्वंति तेषामपि नमो नमः ॥ ॥९॥ कुन्त्युवाच । स्वकर्म फल निर्दिष्टां यां यां योनिं व्रजाम्यहम् । तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढाऽस्तु मे ॥१०॥ माद्युवाच । कृष्णा रताः कृष्णमनुस्मरंति रात्रौ च कृष्णं पुनरुत्थिता ये । ते

भिन्नदेहाः प्रविशन्ति कृष्णं हविर्य
था मंत्रहुतं हुताशे ॥११॥ द्रुपद उ
वाच । कीटेषु पक्षिषु मृगेषु सरीसृ
पेषु रक्षःपिशाचमनुजेष्वपि यत्र य
त्र । जातस्य मे भवतु केशव त्वत्प्र
सादा त्वय्येव भक्तिरचलाऽव्याभि
चारिणी च ॥१२॥ सुभद्रोवाच । ए
कोपि कृष्णस्य कृतः प्रणामो दशा
श्वमेधावभृथेन तुल्यः । दशाश्वमे
धीपुनरेति जन्म कृष्णप्रणामी न पु
नर्भवाय ॥ १३ ॥ अभिमन्युवाच ।
गोविंद गोविंद हरे मुरारे गोविंद गो

विंद रथांगपाणे । गोविंद गोविंद मुकुंद कृष्ण गोविंद गोविंद नमो नमस्ते ॥१४॥ धृष्टद्युम्न उवाच । श्रीराम नारायण वासुदेव गोविंद वैकुण्ठ मुकुंद कृष्ण । श्रीकेशवानंत नृसिंह विष्णो मां त्राहि संसारभुजंगदष्टम् ॥१५॥ सात्यकिरुवाच । अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत । गोविंदानंत सर्वेश वासुदेव नमोऽस्तु ते ॥१६॥ उद्धव उ० । वासुदेवं परित्यज्य योऽन्यं देवमुपासते । तृषितो जाह्नवीतीरे कूपं वांछ

ति दुर्भगः ॥१७॥ धौम्य उ०। अपां समीपे शयनासनस्थं दिवा च रात्रौ च यथाधिगच्छताम्। यद्यस्ति किंचित्सुकृतं कृतं मया जनार्दनस्तेन कृतेन तुष्यतु ॥१८॥ संजय उ०। आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु व्याघ्रादिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवंति॥१९॥ अक्रूर उ०। अहं तु नारायणदासदासदासस्य दासस्य च दासदासः। अन्येभ्य ईशो जगतां नराणां तस्मादहं चान्यतरोऽस्मि लोके॥२०॥

विदुर उ० । वासुदेवस्य ये भक्ताः शांतास्तद्गतमानसाः । तेषां दासस्य दासोऽहं भवेज्जन्मनि जन्मनि ॥२१॥ भीष्म उ० । विपरीतेषु कालेषु परिक्षीणेषु बन्धुषु । त्राहि मां कृपया कृष्ण शरणागतवत्सल २२ द्रोणाचार्य उ० । ये ये हताश्चक्रधरेण राजंस्त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरीं प्रयाताः क्रोधोऽपि देवस्य वरेण तुल्यः॥२३॥ कृपाचार्यउ०।मज्जन्मनःफलमिदं मधुकैटभारे मत्प्रार्थनीयमदनुग्रहएष

एव । त्वद्भृत्यभृत्यपरिचारकभृत्य भृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥२४॥ अश्वत्थामोवाच । गोविंद केशव जनार्दन वासुदेव वि श्वेश विश्व मधुसूदन विश्वनाथ । श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते ॥२५॥ कर्ण उवाच । नान्यं वदामि न शृणोमि न चिंतयामि नान्यं स्म रामि न भजामि न चाश्रयामि । भ क्त्या त्वदीयचरणांबुजमंतरेण श्री श्रीनिवास पुरुषोत्तम देहि दास्यम्

॥२६॥ धृतराष्ट्र उ० नमो नमः कारणवामनाय नारायणायामितविक्रमाय । श्रीशार्ङ्गचक्राब्जगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय २७॥ गांधार्युवाच । त्वमेव माता च पिता त्वमेव त्वमेव बंधुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ २८ ॥ द्रौपद्युवाच ॥ यज्ञेशाच्युतगोविन्द माधवानन्तकेशव ॥ कृष्ण विष्णो हृषीकेश वासुदेवनमोस्तुते ॥२९॥ जयद्रथउवाच ॥ नमः कृष्णाय दे

वाय ब्रह्मणेऽनन्तमूर्तये। योगेश्वरा
ययोगाय त्वामहंशरणंगतः ॥३०॥
विकर्ण उ० ॥ कृष्णाय वासुदेवाय
देवकीनन्दनायच । नन्दगोपकुमा
राय गोविन्दायनमोनमः ॥ ३१ ॥
सोमदत्तउ० ॥ नमःपरमकल्याण
नमस्तेविश्वभावन। वासुदेवायशां
ताय यदूनां पतयेनमः॥३२॥ विरा
टउ० ॥ नमोब्रह्मण्यदेवाय गोब्राह्म
णहिताय च । जगद्धिताय कृष्णा
य गोविन्दायनमोनमः ॥ ३३॥ श
ल्यउ० ॥ अतसीपुष्पसंकाशं पीत

वाससमच्युतं । ये नमस्यन्ति गो
विन्दं न तेषां विद्यतेभयं ॥३४॥ ब
लभद्र उ० कृष्ण कृष्ण कृपालुस्त्व
मगतीनां गतिर्भव । संसारार्णवम
ग्नानां प्रसीद पुरुषोत्तम ॥३५॥ श्री
कृष्ण उ० । कृष्ण कृष्णेति कृष्णे
ति यो मां स्मरति नित्यशः । जलं
भित्त्वा यथा पद्मं नरकादुद्धराम्यह
म् ॥३६॥ सत्यं ब्रवीमि मनुजाःस्व
यमूर्ध्वबाहु यों मां मुकुंद नरसिंह
जनार्दनेति । जीवोजपत्यनुदिनं म
रणे रणे वा पाषाण काष्ठसदृशं प्र

ददाम्यभीष्टम् ॥३७॥ सूत उ० । तत्रैव गंगा यमुना च वेणी गोदावरी सिंधु सरस्वती च । सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसंगः ॥३८॥ यम उ० । नरके पच्यमानं तु यमेन परिभाषितम् । किंत्वया नार्चितो देवः केशवःक्लेशनाशनः ॥३९॥ नारद उ० । जन्मांतरसहस्रेण तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णेभक्तिः प्रजायते ॥४०॥ प्रह्लाद उ० । नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् । ते

षु तेष्वचला भक्तिरच्युतास्तु सदा त्वयि ॥४१॥ याप्रीतिर विवेकानां विषयेष्वनपायिनी । त्वामनुस्मर तःसा मे हृदयान्माऽपसर्पतु ॥४२॥ विश्वामित्र उ० । किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः । यो नित्यं ध्यायते देवं नराणां मनसि स्थितम् ॥४३॥ जमदग्निरुवाच । नित्योत्सवस्तदा तेषां नित्यश्रीर्नित्यमंगलं । येषां हृदिस्थो भगवान्मंगलायतनो हरिः ॥ ४४ ॥ भरद्वाज उ० । लाभस्तेषां जयस्तेषां कुतस्ते

षां पराजयः । येषामिंदीवरस्यामो हृदयस्थो जनार्दनः ॥४५॥ गौतम उ० । गोकोटिदानं ग्रहणेषु काशी प्रयागगंगाऽयुतकल्पवासः । यज्ञा युतं मेरुसुवर्णदानं गोविंदनाम्ना न कदापि तुल्यं ॥४६॥ अत्रिरुवाच । गोविंदेति सदास्नानं गोविंदेति सदा जपः । गोविंदेति सदा ध्यानं सदा गोविंदकीर्तनं ॥४७॥ अक्षरं हि परं ब्रह्म गोविंदेत्यक्षरत्रयं । तस्मा दुच्चरितं येन ब्रह्मभूयाय कल्पते ॥ ॥४८॥ श्रीशुक उ० । अच्युतः क

ल्पवृक्षोसावनन्तःकामधेनवः । चिंतामणिश्च गोविन्दो हरिनाम विचिंतयेत् ॥४९॥ हरिरुवाच । जयति जयति देवो देवकीनन्दनोऽयं जयति जयति कृष्णो वृष्णिवंशप्रदीपः । जयति जयति मेघश्यामलः कोमलांगो जयति जयति पृथ्वीभारनाशो मुकुंदः ॥५०॥ पिप्पलायन उ० । श्रीमन्नृसिंह विभवे गरुडध्वजाय तापत्रयोपशमनाय भवौषधाय । कृष्णाय वृश्चिकजलाग्निभुजंगरोगक्लेशव्ययाय हरये गुरवे नम

स्ते ॥५१॥ आविर्होत्र उ० । कृष्ण त्वदीयपदपंकजपंजरांते अद्यैव मे विशतु मानसराजहंसः । प्राणप्रयाणसमये कफवातपित्तैः कंठावरोधन विधौ स्मरणं कुतस्ते ॥५२॥ विदुर उ० । हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥५३॥ वसिष्ठ उ० । कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते । भस्मीभवंति तस्याशु महापातककोटयः ॥५४॥ अरुंधत्युवाच । कृष्णाय वासुदेवाय हर

ये परमात्मने । प्रणतक्लेशनाशा
य गोविंदाय नमो नमः ॥५५॥ क
श्यप उ० । कृष्णानुस्मरणादेव पा
पसंघातपंजरः । शतधा भेदमाप्नो
ति गिरिर्वज्रहतोयथा ॥५६॥ दुर्यो
धन उ० । जानामि धर्मं न च मे प्र
वृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः
केनापि देवेन हृदि स्थितेन यथा नि
युक्तोऽस्मि तथा करोमि ॥५७॥ य
न्त्र स्वगुणदोषेण क्षम्यतां मधुसूद
नः । अहमेवमहं हंतुं मम दोषो न
विद्यते ॥५८॥ भृगुरुवाच । नामैव

तव गोविंद कलौ त्वत्तः शताधिकम् । ददात्युच्चारणान्मुक्तिं विनाऽष्टांगयोगतः ॥५९॥ लोमहर्षण उ० । नमामि नारायणपादपंकजं करोमि नारायणपूजनं सदा । वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययं ॥६०॥ शौनक उवाच । स्मृत्वा सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिं ॥६१॥ गर्ग उवाच । नारायणेति मंत्रोऽस्ति वागस्ति वशवर्तिनी । तथापि नरके घोरे पतंती

त्येतदद्भुतं ॥६२॥ दाल्भ्य उ० । किं तस्य बहुभिर्मंत्रैर्भक्तिर्यस्य जनार्दने । नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥६३॥ वैशंपायन उवाच । यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥६४॥ अंगिरा उवाच । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥६५॥ पराशर उवाच । सकृदुच्चरितं येन हरिरित्यक्षरद्वयं । बद्धः परिकरस्तेन

मोक्षाय गमनं प्रति॥६६॥पौलस्त्य उवाच। हे जिह्वे रससारज्ञे सर्वदा मधुर प्रिये। नारायणाख्यं पीयूषं पिब जिह्वे निरंतरं ॥६७॥ व्यासउवाच। सत्यं सत्यं पुनःसत्यं भुज मुत्थाप्य चोच्यते। न वेदाच्च परं शास्त्रं न देवः केशवात्परः॥६८॥ धन्वंतरिरुवाच। अच्युतानंत गोविंद नामोच्चारणभेषजात्। नश्यंति सकलारोगाः सत्यं सत्यं वदाम्यहं ॥६९॥ मार्कंडेय उवाच। साहानि स्तन्महच्छिद्रं सा चांधजडमूढता।

यन्मुहूर्तं क्षणंवापि वासुदेवं नचिंत
येत् ॥७९॥ अगस्त्य उवाच । नि
मिषं निमिषार्धं वा प्राणिनां विष्णु
चिंतनं ॥ क्रतुकोटिसहस्राणां ध्या
नमेकं विशिष्यते ॥७१॥ मनसा क
र्मणा वाचा ये स्मरंति जनार्दनम् ॥
तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं व
नं ॥७२॥ श्रीशुक उ० ॥आलोड्य
सर्वशास्त्राणि विचार्यैव पुनःपुनः। इ
दमेकंसुनिष्पन्नं ध्येयोनारायणः स
दा७३श्रीमहादेवउ०। शरीरंचनव
च्छिद्रं व्याधिग्रस्तं कलेवरम् ॥

औषधं जान्हवीतोयं वैद्यो नाराय
णो हरिः ॥७४॥ शौनक उवाच ॥
भोजनाच्छादने चिन्तां वृथा कुर्व
न्ति मानवाः ॥ योसौ विश्वम्भरो
देवः सभक्तान् किमुपेक्षते ॥७५॥
एवं ब्रह्मादयो देवाऋषयश्च तपोध
नाः ॥ कीर्तयन्ति सुरश्रेष्ठं देवं ना
रायणं विभुम् ॥७६॥ सनत्कुमार
उवाच ॥ यस्य हस्तेगदा चक्रं ग
रुडो यस्य वाहनं ॥ शंखःकरतले
यस्य स मे विष्णुःप्रसीदतु॥७७॥
इदं पवित्रमायुष्यं पुण्यं पापप्रणा

शनं ॥ यः पठेत्प्रातरुत्थाय वैष्णवं स्तोत्रमुत्तमं ॥७८॥ सर्वपापविनिर्मुक्तो विष्णु सायुज्यमाप्नुयात् ॥ धर्मार्थकाममोक्षार्थं पाण्डवैः परिकीर्तितम् ॥७९॥ आकाशात्पतितं तोयं यथा गच्छति सागरं ॥ सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥८०॥ इति श्रीपाण्डवकृतप्रपन्नगीता सम्पूर्णा ॥

सप्तश्लोकी गीता।

ओमित्येकाक्षरं ब्रह्मव्याहरन्मामनुस्मरन् । यःप्रयाति त्यजन्देहं

स याति परमां गतिम् ॥१॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥२॥ सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्यातिष्ठति ॥ ३ ॥ कविंपुराणमनुशासितारमणोरणीयांसमनु स्मरेद्यः । सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छं

दांसि यस्य पर्णानियस्तं वेद स वे दवित् ॥५॥ सर्वस्य चाहं हृदिस न्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्चसर्वैरहमेव वेद्यो वेदा न्तविद्वेदविदेवचाहम् ॥६॥ मन्म ना भव मद्भक्तो मद्याजीमांनमस्कु रु ॥ मामेवैष्यसि युक्त्वैव मात्मा नंमत्परायणः ॥७॥ इति श्री भग वद्गीतासूपनिषत्सु ब्रह्म विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादेस प्तश्लोकीगीता स० ॥



षट्पदीस्तोत्रम् ।

श्रीगणेशाय नमः । अविनयम
पनय विष्णो दमय मनः शमय विष
यमृगतृष्णाम् । भूतदयां विस्तार
य तारय संसारसागरतः ॥१॥ दि
व्यधुनीमकरंदे परिमलपरिभोगस
च्चिदानन्दे । श्रीपतिपदारविंदे भव
भयखेदच्छिदे वन्दे ॥२॥ सत्यपि
भेदापगमे नाथ तवाहं न मामकीन
स्त्वम् । सामुद्रो हि तरंगः क्व च न
समुद्रो न तारंगः ॥३॥ उद्धृतनग न
गभिदनुज दनुजकुलामित्र मित्रश

शिदृष्टे। दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता सदावसुधाम्। परमेश्वर परिपाल्यो भवता भवताप भीतोऽहम् ॥५॥ दामोदर गुणमंदिर सुंदरवदनारविंद गोविंद ॥ भवजलधिमथनमंदर परमं दरमपनय त्वं मे ॥६॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ। इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥७॥ इति श्रीमत्परमहंस

परिव्राजकाचार्य श्रीमच्छंकराचार्यविरचितं षट्पदीस्तोत्रं संपूर्णम्‌॥

अथ गर्भस्तुति प्रा०।

देवा ऊचुः। जगद्योनिरयोनिस्त्वमनंतोऽव्यय एव च। ज्योतिःस्वरूपो ह्यनिशं सगुणो निर्गुणो महान्‌॥॥१॥ भक्तानुरोधात्साकारो निराकारो निरंकुशः। निर्व्यूहो निखिलाधारो निःशंको निरुपद्रवः॥२॥ निरुपाधिश्च निर्लिप्तो निरीहो निधनांतकः। स्वात्मारामः पूर्णकामो निमिषो नित्य एव च॥३॥ स्वेच्छामयः

सर्वहेतुःसर्वःसर्वगुणाश्रयः । सर्वदो दुःखदो दुर्गो दुर्जनांतक एव च ॥ ॥४॥ सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः । वेदहेतुश्च वेदाश्च वेदांगो वेदविद्विभुः ॥५॥ इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः । हर्षाश्रुलोचनाःसर्वेववृषुःकुसुमानि च ॥६॥ द्विचत्वारिंशन्नामानि प्रातरुत्थाय यःपठेत् । दृढां भक्तिं हरेर्दास्यं लभते वांछितं फलम् ॥७॥ इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः । बभूव जलवृष्टिश्च निश्चे

ष्टा मथुरा पुरी ॥८॥ इति ब्रह्मवैवर्ते महापुराणे कृष्णजन्मखण्डे देवकृत गर्भस्तुतिःसंपूर्णाः ॥

अथ वसुदेवकृत कृष्णस्तोत्रं प्रा० ।

श्रीगणेशाय नमः । वसुदेव उ० ।
त्वामतींद्रियमव्यक्तमक्षरं निर्गुणं विभुं । ध्यानासाध्यंच सर्वेषां परमात्मानमीश्वरं १ स्वेच्छामयंसर्वरूपं स्वेच्छारूप धरंपरं । निर्लिप्तंपरमंब्रह्मबीजरूपंसनातनं २ स्थूलात्स्थूलतरं प्राप्तमातिसूक्ष्ममदर्शनं । स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकं ३ ॥

शरीरवंतं सगुणमशरीरं गुणोत्करं।
प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः प
रं ॥४॥ सर्वेशं सर्वरूपं च सर्वांतक
रमव्ययम् । सर्वाधारं निराधारं नि
र्व्यूहं स्तौमि किं विभुं ॥५॥ अनंतः
स्तवनेऽशक्तोऽशक्ता देवी सरस्वती
यंवा स्तोतुमशक्तश्च पंचवक्त्रःषडा
ननः॥६॥चतुर्मुखो वेदकर्ता यं स्तो
तुंचाक्षमःसदा। गणेशोन समर्थश्च
योगींद्राणां गुरोर्गुरुः ॥७॥ ऋषयो
देवताश्चैव मुनींद्रमनुमानवाः। स्व
प्ने तेषामदृश्यं च त्वामेवं किं स्तु

यन्ति ते॥८॥स्तुतयः स्तवनेऽशक्ताः किं स्तुवंति विपश्चितः। विहायैवं शरीरं च बालो भवतु मद्गसि॥९॥ वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः। भक्तिदास्यमवाप्नोति श्रीकृष्णचरणांबुजे॥१०॥ विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम्। संकटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते॥११॥ इति ब्रह्मवैवर्ते महापुराणे कृष्णजन्मखंडे वसुदेवकृतं कृष्णस्तोत्रं संपूर्णं।

## अथ बालकृत कृष्णस्तोत्रं ।

श्रीगणेशाय नमः । बाला ऊचुः
यथा सं रक्षितं ब्रह्मन्सर्वापत्स्वेव
नःकुलं । तथा रक्षां कुरु पुनर्दावाग्ने
मधुसूदन ॥१॥ त्वमिष्टदेवताऽस्मा
कं त्वमेव कुलदेवता । स्रष्टा पाता
च संहर्ता जगतां च जगत्पते ॥२॥
वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य
एव च । यमः कुबेरः पवन ईशाना
द्याश्च देवताः ॥३॥ ब्रह्मेशशेषधर्मे
द्रा मुनींद्रा मनवःस्मृताः । मानवा
श्च तथा दैत्या यक्षराक्षसकिन्नराः

ये ये चरा चराश्चैव सर्वे तव विभूत
यः । आविर्भावस्तिरोभावः सर्वेषां
च तवेच्छया ॥५॥ अभयं देहि गो
विंद वह्निसंहरणं कुरु । वयं त्वां श
रणं यामो रक्ष नः शरणागतान् ६॥
इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा
पदाम्बुजं । दूरीभूतस्तु दावाग्निः
श्रीकृष्णामृतदृष्टितः ॥७॥ दूरीभू
ते च दावाग्नौ ननृतुस्ते मुदान्विताः
सर्वापदःप्रणश्यंति हरिस्मरणमात्र
तः८इदंस्तोत्रंमहापुण्यंप्रातरुत्थाय
यःपठेत।वन्हितोन भवेत्तस्य भयंज

श्रीपते शमयदुःखमशेषं ॥१॥ वि
श्वमंगलविभो जगदीशनन्दनन्दन
नृसिंहनरेंद्र । मुक्तिदायक मुकुन्द
मुरारे० ॥२॥ रामचन्द्र रघुनायक
देव दीननाथ दुरितक्षयकारिन् ।
यादवेन्द्र यदुभूषण यज्ञ० ॥३॥ दे
वकीतनय दुःखदवाग्ने राधिकारम
णरम्यसुमूर्ते । दुःखमोचन दयार्ण
वनाथ० ॥४॥ गोपिकावदनचन्द
चकोर नित्य निर्गुण निरंजन जि
ष्णो । पूर्णरूप जय शंकर शर्व श्री
पते शमय दुःखमशेषं ॥५॥ गोकु

लेश गिरिधारणधीर यामुनाच्छतट खेलन वीर । नारदादिमुनिवंदित पाद श्रीपते शमय दुःखमशेषं ॥६॥ द्वारकाधिप दुरंतगुणाब्धे प्राणनाथ परिपूर्ण भवारे । ज्ञानगम्य गुणसागर ब्रह्मन् श्रीपते शमय दुःखमशेषं ॥७॥ दुष्टनिर्दलन देव दयालो पद्मनाभ धरणीधरधर्मिन् । रावणांतकरमेश मुरारे श्रीपते शमय दुःखमशेषं ॥८॥ अच्युताष्टकमिदं रमणीयं निर्मितं भवभयं विनिहंतुं । यः पठेद्विषयवृत्ति निवृत्तिर्जन्मदुःखम

खिलं स जहाति ॥९॥ इति शंकराचार्यविरचितमच्युताष्टकस्तोत्रं।

अथ पाण्डुरंगाष्टकप्रारम्भः।

महायोगपीठे तटे भीमरथ्याः परं पुण्डरीकाय दातुं मुनीन्द्रैः॥ समागत्य तिष्ठन्तमानंदकन्दं परब्रह्मलिंगं भजे पाण्डुरङ्गं ॥१॥ तडिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशं। वरं त्विष्टिकायां समन्यस्तपादं परब्रह्मलिंगं भजे पाण्डुरंगं ॥२॥ प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां

धृतो येन तस्मात् । विधातुर्वसत्यै
धृतो नाभिकोशः परब्रह्मलिंगं भजे
पाण्डुरंगं ॥ ३ ॥ स्फुरत्कौस्तुभालं
कृतं कंठदेशे श्रिया जुष्टकेयूरकं
श्रीनिवासं । शिवंशांतमीड्यं वरं लो
कपालं परब्रह्मरूपं भजे पाण्डुरं०
॥४॥ शरच्चंद्रबिंबाननं चारुहासं ल
सत्कुंडलाक्रांतगंडस्थलांगं । जपा
रागबिंबाधरं कंजनेत्रं परब्रह्मलिंगं
भजे पांडुरंगं ॥५॥ किरीटोज्ज्वल
त्सर्वदिक्प्रांतभागं सुरैरर्चितं दि
व्यरत्नैरनर्घैः । त्रिभङ्गाकृतिं बर्ह

माल्यावतंसं परब्रह्मलिंगं भजे पां
डुरंगं ॥६॥ विभुं वेणुनादं चरंतं दुरं
तं स्वयं लीलया गोपवेषं दधानं ।
गवां वृंदकानंदनं चारुहासं परब्रह्म
लिंगं भजे पांडुरंगं॥७॥अजं रुक्मि
णीप्राणसंजीवनं तं परं धाम कैवल्य
मेकं तुरीयं । प्रसन्नं प्रपन्नार्तिहं दे
वदेवं परब्रह्मलिंगं भजे पांडुरंगं ॥
॥८॥ स्तवं पाण्डुरंगस्य वै पुण्यदं ये
पठंत्येकचित्तेन भक्त्या च नित्यं।
भवांभोनिधिं तेपि तीर्त्वाऽंतकाले ह
रेरालयं शाश्वतं प्राप्नुवंति ॥९॥ इ

ति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यं विरचितं पांडुरं गाष्टकं सम्पूर्णं ॥

नारायणस्तोत्रं ।

श्रीगणेशाय नमः। नारायण नारायण जय गोविंद हरे । नारायण नारायण जय गोपाल हरे । ध्रु० । करुणापारावारा वरुणालयगंभीरा। नारायण०। घननीरदसंकाशा कृतकलिकल्मषनाशा । ना० ॥२॥ यमुनातीरविहारा धृतकौस्तुभमणिहारा । ना० ॥ ३ ॥ पीतांबरपरिधा

ना सुरकल्याणनिधाना । ना० ४॥
मंजुलगुंजाभूषा मायामानुषवेषा ।
ना० ॥५॥ राधाऽधरमधुरसिका र
जनीकरकुलतिलका । ना० ॥६॥
मुरलीगानविनोदावेदस्तुतभूपादा।
ना० ॥७॥ बर्हिनिबर्हापीडा नटना
टकफणिक्रीडा । ना० ॥८॥ वारि
जभूषणभरणा राजीवरुक्मिणीरम
णा । ना० ॥९॥ जलरुहदलनिभ
नेत्रा जगदारंभकसूत्रा । ना० १०॥
पातकरजनीसंहर करुणालयमामु
द्धर । ना० ॥ ११ ॥ अघबकक्षयकं

सारे केशव कृष्ण मुरारे । ना० १२ हाटकनिभपीतांबर अभयं कुरु मे मावर । ना० ॥१३॥ दशरथराजकुमारा दानवमदसंहारा । ना० १४॥ गोवर्धनगिरिरमणा गोपीमानसहरणा । ना० ॥१५॥ शरयूतीरविहारा सज्जनऋषिमंदारा । ना० ॥ १६ ॥ विश्वामित्रमखत्रा विविधपरासुचरित्रा । ना० ॥१७॥ ध्वजवज्रांकुशपादा धरणीसुतसहमोदा । ना० । ॥१८॥ जनकसुताप्रतिपाला जय जय संस्मृतिलीला । ना० ॥१९॥ द

शरथवाग्धृतिभारा दंडकवनसंचारा । ना० ॥२०॥ मुष्टिकचाणूरसंहारा मुनिमानसविहारा । ना० ॥ ॥२१॥ वालीनिग्रहशौर्या वरसुग्रीवहितार्या । ना० ॥२२॥ मां मुरलीकर धीवर पालय पालय श्रीधर । ना० ॥२३॥ जलनिधिबंधनधीरा रावणकंठविदारा । ना० ॥ २४ ॥ ताटीमद्दलनाढ्या नटगणविविधधनाढ्या । ना० २५ गौतमपत्नीपूजन करुणाघनावलोकन । ना०२६॥ संभ्रमसीताहारा साकेतपुरविहारा

ना० ॥२७॥ अचलोद्धृतिचंचत्कर भक्तानुग्रहतत्पर । ना० ॥२८॥ नैगमगानविनोदा रक्षःसुत प्रह्लादा । ना० ॥२९॥ भारतियतिवरशंकर नामामृतमखिलान्तर । नारायण० । नारायणनारायण जय गोपालहरे ३०॥ इति श्रीमच्छंकराचार्यविरचितं नारायणस्तोत्रं सम्पूर्णं ॥

शालिग्रामस्तोत्रम् ।

श्रीगणेशाय नमः । अस्य श्री शालिग्रामस्तोत्रमंत्रस्य श्रीभगवान् ऋषिः । नारायणोदेवता ॥ अ

नुष्टुप छंदः । श्रीशालिग्रामस्तोत्र
मंत्रजपे विनियोगः । युधिष्ठिर उ
वाच । श्रीदेवदेव देवेश दैवतार्चन
मुत्तमम् । तत्सर्वं श्रोतुमिच्छामि
ब्रूहि मे पुरुषोत्तम ॥१॥ श्रीभगवा
नुवाच । गंडक्यां चोत्तरे तीरे गि
रिराजस्य दक्षिणे । दशयोजनवि
स्तीर्णा महाक्षेत्रवसुंधरा ॥२॥ शा
लिग्रामो भवेद्देवो देवीद्वारावती भ
वेत् । उभयोःसंगमो यत्र मुक्तिस्त
त्र न संशयः ॥ ३ ॥ शालिग्रामशि
लायत्र यत्रद्वारावती शिला । उभ

योः संगमो यत्रमुक्तिस्तत्र न संश
यः ॥४॥ आजन्मकृतपापानां प्राय
श्चित्तं य इच्छति । शालिग्रामशि
लावारि पापहारि नमोस्तु ते ॥५॥
अकालमृत्युहरणं सर्वव्याधिविना
शनं । विष्णोःपादोदकं पीत्वा शिर
सा धारयाम्यहं ॥ ६ ॥ शंखमध्ये
स्थितं तोयं भ्रामितं केशवोपरि ।
अंगलग्नं मनुष्याणां ब्रह्महत्यादि
कं दहेत् ॥७॥ स्नानोदकं पिबेन्नि
त्यं चक्रांकितशिलोद्भवं । प्रक्षाल्य
शुद्धि तत्तोयं ब्रह्महत्यां व्यपोहति ॥

॥८॥ अग्निष्टोमसहस्राणि वाजपेयशतानि च। सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ॥९॥ नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः। योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥१०॥ खंडिताः स्फुटिता भिन्नाअग्निदग्धास्तथैव च। शालिग्रामशिला यत्र तत्र दोषो न विद्यते ॥११॥ न मंत्रःपूजनं नैव नतीर्थं नच्च भावना। न स्तुतिर्नोपचारश्च शालिग्राम

शिलार्चने ॥ १२ ॥ ब्रह्महत्यादिकं पापं मनोवाक्कायसंभवम् । शीघ्रं नश्यतितत्सर्वं शालिग्राम शिलार्चनात् ॥१३॥ नानावर्णाभयं चैव नाना भोगेन वेष्टितम् । तथावरप्रसादेन लक्ष्मीकांतं वदाम्यहम् १४॥ नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा । तथावरप्रसादेनलक्ष्मीकांतं वदाम्यहम् ॥१५॥ कृष्णे शिलातले यत्र सूक्ष्मं चक्रं सुदृश्यते । सौभाग्यं संततिं धत्ते सर्वं सौख्यं ददाति च ॥१६॥ वासुदेवस्य चि

ह्नानि दृष्ट्वा पापैः प्रमुच्यते । श्री
धरः सुकरे वामे हरिद्वर्णस्तु दृश्य
ते ॥ १७ ॥ वाराहरूपिणं देवं
कूर्मांगैरपि चिह्नितम् । गोपदं त
त्र दृश्येत वाराहंवामनंतथा ॥१८॥
पीतवर्णस्तु देवानां रक्तवर्ण भया
वहं । नारसिंहो भवेद्देवो मोक्षदं च
प्रकीर्तितं ॥ १९ ॥ शंखचक्रगदाकू
र्माः शंखो यत्र प्रदृश्यते । शंखवर्ण
स्य देवानां वामदेवस्य लक्षणं२०॥
दामोदरं तथा स्थूलं मध्ये चक्र प्र
तिष्ठितं । पूर्णद्वारेण संकीर्णा पीतरे

खा च दृश्यते ॥२१॥ छत्राकारे भ
वेद्राज्यं वर्तुले च महाश्रियः। चिपि
टेच महा दुःखं शूलाग्रे तु रणे ध्रु
वम्॥२२॥ललाटे शेष भागस्तु शिरोप
रि सुकांचनम्॥चक्रकांचनवर्णानां
वामदेवस्य लक्षणं॥२३॥वामपार्श्वे
च वै चक्रे कृष्णवर्णस्तु पिंगले । ल
क्ष्मी नृसिंहदेवानां पृथग्वर्णस्तु दृ
श्यते ॥२४॥ लंबोष्ठेच दरिद्रं स्या
त्पिंगले हानिरेव च । लग्नचक्रेभवे
द्व्याधिर्विदारे मरणंध्रुवं ॥२५॥ पा
दोदकंच निर्माल्यं मस्तके धारये

त्सदा । विष्णोर्दृष्टं भक्षितव्यं तुलसीदलमिश्रितं ॥२६॥ कल्पकोटिसहस्राणि वैकुंठे वसते सदा । शालिग्रामशिलाविंदु हत्याकोटिविनाशनः ॥२७॥ तस्मात्संपूजयेद्‌ध्यात्वा पूजितंचापि सर्वदा । शालग्रामशिलास्तोत्रं यः पठेच्च द्विजोत्तमः ॥२८॥ स गच्छेत्परमंस्थानं यत्र लोकेश्वरो हरिः ः सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥२९॥ दशावतारो देवानां पृथग्वर्णस्तु दृश्यते । ईप्सितं लभते राज्यं विष्णु

पूजामनुक्रमात् ॥ ३० ॥ कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः। ताःसर्वा नाशमायान्ति विष्णोर्नैवेद्यभक्षणात् ॥३१॥ विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनं तस्मादष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥३२॥ इति श्रीभविष्योत्तरपुराणे गण्डकीशिलामाहात्म्ये श्रीकृष्णयुधिष्ठिरसम्वादे शालग्रामस्तोत्रं संपूर्णं।

अथ गोपालस्तोत्र प्रा०।

श्रीगणेशाय नमः। नारद उवाच।

नवीननीरदश्यामं नीलेन्दीवरलोचनं । वल्लवीवल्लभं वन्दे कृष्णं गोपालरूपिणं ॥१॥ स्फुरद्बर्हदलोद्बद्धनीलकुञ्चितमूर्धजम् । कदम्बकुसुमोद्बद्ध वनमालाविभूषितम् ॥२॥ गण्डमण्डलसंसर्गि चलत्कुञ्चितकुन्तलम् । स्थूलमुक्ताफलोदारहारोद्द्योतितवक्षसम् ॥३॥ हेमांगदतुलाकोटि किरीटोज्ज्वलविग्रहम् । मन्दमारुतसंक्षोभ चलिताम्बरसञ्चयम् ॥४॥ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः । लसद्गोपालि

काञ्चेतो मोहयन्तं पुनःपुनः ॥ ५ ॥ बल्लवीवदनाम्भोज मधुपानमधुव्रतम् । क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥६॥ यौवनोद्भिन्नदेहाभिः संसक्ताभिःपरस्परम् । विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥७॥प्रभिन्नाञ्जनकालिन्दी जलकेलिकलोत्सुकं । योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणं ॥८॥ कालिन्दीजलसंसर्गिशीतलानिलसेविते । कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥९॥ रत्नभूधरसं

लसद्रत्नासनपरिग्रहं । कल्पपादप
मध्यस्थ हेममण्डपिकागतं ॥१०॥
वसन्तकुसुमामोद सुरभीकृत दि
ङ्मुखं । गोवर्धनगिरौ रम्ये स्थितं
रासरसोत्सुकं ॥११॥ सव्यहस्तत
लन्यस्तगिरिवर्यातपत्रकं । खण्डि
ताखण्डलोन्मुक्त मुक्तासारघनाघ
नं ॥१२॥ वेणुवाद्यमहोल्लासकृतहुं
कारनिःस्वनैः । सरसैरुन्मुखैःशश्व
द्गोकुलैरभिवीक्षितं ॥१३॥ कृष्णमे
वानुगायद्भिस्तच्चेष्टावशवर्तिभिः ॥
दण्डपाशोद्यतकरै गोपालैरुपशोभि

तं ॥१४॥ नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः । प्रीतिसुस्निग्धयावाचा स्तूयमानं परात्परम् ॥१५॥ य एनं चिन्तयेद्देवं भक्त्या संस्तौति मानवः । त्रिसन्ध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितं ॥१६॥ राजवल्लभतामेति भवेत्सर्वजनप्रियः । अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवं ॥१७॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे गोपालस्तोत्रं सम्पूर्णं ।

अथ श्रीकृष्णस्तवराज प्रा० ।

श्रीगणेशाय नमः । श्रीमहादेव उवाच । शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभं । यज्ज्ञात्वा न पुनर्गच्छन्नरो निरययातनां ॥१ नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता । सनत्कुमारेण पुरा योगीन्द्रगुरुवर्त्मना ॥२॥ श्रीनारद उ० । प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने । तवाङ्घ्रिपंकजरजोरागिणीभक्तिमुत्तमाम् ॥३॥ अज प्रसीद भगवन्नमितद्युतिपंजर । अप्रमेय प्रसीदा

स्मद्दुःखहन्पुरुषोत्तम ॥४॥ स्वसं
वेद्य प्रसीदास्मदानंदात्मन्ननामय।
अचिन्त्यसार विश्वात्मन्प्रसीद प
रमेश्वर ॥५॥ प्रसीद तुंग तुंगानां
प्रसीद शिवशोभन । प्रसीद गुणग
भीर गंभीराणांमहाद्युते ॥६॥ प्रसी
द व्यक्त विस्तीर्ण विस्तीर्णानामगो
चर । प्रसीदार्द्रार्द्रजातीनां प्रसीदा
त्यान्तदायिनां ॥७॥ गुरोर्गरीयःस
र्वेश प्रसीदानन्त देहिनां । जय मा
धव मायात्मन् जय शाश्वत शंखभृ
त् ॥८॥ जय शंखधर श्रीमन् जय

नंदकनंदन । जय चक्रगदापाणे ज
य देव जनार्दन ॥९॥ जय रत्नवरा
बद्धकिरीटाक्रान्तमस्तक । जय प
क्षिपतिच्छायानिरुद्धार्ककरागण ॥
॥१०॥ नमस्ते नरकाराते नमस्ते
मधुसूदन । नमस्ते ललितापांग न
मस्ते नरकान्तक ॥११॥ नमःपाप
हरेशान नमःसर्वभयापह । नमःसं
भूतसर्वात्मन्नमः संभृतकौस्तुभ ॥
॥१२॥ नमस्ते नयनातीत नमस्ते
भयहारकः । नमो विभिन्नवेषाय
नमःश्रुतिपथातिग ॥१३॥ नमस्त्रि

मूर्तिभेदेन सर्गस्थित्यंतहेतवे । विष्णवे त्रिदशाराति जिष्णवे परमात्मने ॥१४॥ चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभ । विश्वाय विश्ववंद्याय विश्वभूतानुवर्तिने ॥१५॥ नमोऽस्तु योगिध्येयात्म न्नमस्त्वध्यात्मरूपिणे । भक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ॥१६॥ पूजनं हवनं चेज्या ध्यानंपश्चान्नमस्क्रिया । देवेश कर्म सर्वं मे भवेदाराधनं तव ॥१७॥ इति हवनजपार्चाभेदतो विष्णुपूजानियतहृदयकर्मा य

स्तु मंत्री चिराय। स खलु सकलका
मान् प्राप्य कृष्णांतरात्मा जनन
मृतिविमुक्तोऽत्युत्तमां भक्तिमेति॥
॥१८॥ गोगोपगोपिकावीतं गोपा
लं गोषु गोप्रदं। गोपैरीड्यं गोसहस्रै
र्नौमि गोकुलनायकं॥१९॥ प्रीणये
दनया स्तुत्या जगन्नाथं जगन्मयं
धर्मार्थकाममोक्षाणामाप्तये पुरुषो
त्तमं॥२०॥इति श्रीनारदपंचरात्रेज्ञा
नामृतसारे श्रीकृष्णस्तवराजः सं०

अथ त्रैलोक्यमंगलकवचप्रा०।

श्रीगणेशाय नमः। नारद उवा

॥९॥ प्रणवो मे शिरःपातु नमो ना
रायणाय च । भालं मे नेत्रयुगल
मष्टार्णो भुक्तिमुक्तिदः ॥१०॥ क्लीं
पायाच्छ्रोत्रयुग्मं चैकाक्षरः सर्वमो
हनः । क्लीं कृष्णाय सदा घ्राणं गो
विंदायेति जिह्विका ॥ ११ ॥ गोपी
जनपदवल्लभाय स्वाहाननं मम ।
अष्टादशाक्षरो मंत्रःकंठं पातु दशा
क्षरः ॥१२॥ गोपीजनपदवल्लभाय
स्वाहा भुजद्वयं । क्लींग्लौं क्लीं श्या
मलांगाय नमःस्कंधौ दशाक्षरः ॥
॥१३॥ क्लीं कृष्णः क्लीं करौ पाया

त् क्लीं कृष्णायांगतोऽवतु । हृदयं भुवनेशानः क्लीं स्तनौ मम ॥१४॥ गोपालायाग्निजायान्तं कुक्षियुग्मं सदावतु । क्लीं कृष्णाय सदा पातु पार्श्वयुग्ममनुत्तमः ॥ १५॥ कृष्ण गोविन्दकौ पातु स्मराद्यो ङेयुतो मनुः । अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥१६॥ पृष्ठं क्लीं कृष्णकं गल्लं क्लीं कृष्णाय द्विठान्तकः ॥ सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्ण ठद्वयं॥१७॥ऊरू सप्ताक्षरः पायात् त्रयोदशाक्षरोऽवतु ।

श्रींक्लींह्रीं पदतो गोपी जनवल्लभ
दन्ततः ॥१८॥ माय स्वाहेति पायुं
वै क्लीं ह्रीं श्रीं स दशार्णकः । जानु
नी च सदा पातु ह्रीं श्रीं क्लीं च दशा
क्षरः ॥१९॥ त्रयोदशाक्षरः पातु जं
घे चक्राद्युदायुधः । अष्टादशाक्षरो
ह्रीं श्रीं पूर्वकोविंशदर्णकः ॥ २० ॥
सर्वांगं मे सदा पातु द्वारकानायको
बली । नमो भगवतेपश्चाद्वासुदेवा
य तत्परं ॥२१॥ ताराद्यो द्वादशा
र्णोऽयं प्राच्यां मां सर्वदाऽवतु । श्रीं
ह्रीं क्लीं च दशार्णस्तु क्लीं ह्रीं श्रीं

षोडशार्णकः ॥२२॥ गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु । ह्रीं श्रीं दशाक्षरो मन्त्रो दक्षिणे मां सदावतु ॥२३॥ तारो नमो भगवते रुक्मिणी वल्लभाय च । स्वाहेतिषोडशार्णो यं नैऋत्यां दिशि रक्षतु॥२४॥क्लीं हृषीकपदेशाय नमो मां वारुणोऽवतु । अष्टादशार्णःकामान्तो वायव्ये मां सदावतु ॥२५॥ श्रीं मायाकाम कृष्णाय गोविंदायद्विठोमनुःद्वा दशार्णात्मकोविष्णुरुत्तरे मां सदा ऽवतु ॥२६॥ वाग्भवं कामकृष्णाय

ह्रीं गोविन्दाय तत्पर । श्रीं गोपीज
नवल्लभान्तेभाय स्वाहा हस्तौ त
तः ॥२७॥ द्वाविंशत्यक्षरो मन्त्रो
मामैशान्यां सदाऽवतु । कालियस्य
फणामध्ये दिव्यं नृत्यं करोति तं
॥२८॥ नमामिदेवकीपुत्रं नृत्यरा
जंतमच्युतं । द्वात्रिंशदक्षरो मन्त्रो
ऽप्यधो मां सर्वदाऽवतु॥२९॥काम
देवाय विद्महे पुष्पबाणाय धीमहि
॥ तन्नोऽनंगः प्रचोदया देषा मां
पातुचोर्ध्वतः ॥३०॥ इतितेकथितं
विप्र ब्रह्ममंत्रौघविग्रहं। त्रैलोक्यमं

गलंनाम कवचंब्रह्मरूपकं ॥ ३१ ॥
ब्रह्मणाकथितं पूर्वं नारायणमुखात्
च्छुतं । तवस्नेहान्मयाऽऽख्यातं प्र
वक्तव्यं न कस्यचित् ॥३२॥ गुरुंप्र
णम्यविधिवत्कवचं प्रपठेत्ततः । स
कृद्द्विस्त्रिर्यथाज्ञानं स हि सर्वतपो
मयः ॥३३॥ मंत्रेषुसकलेष्वेव दैशि
कोनात्रसंशयः। शतमष्टोत्तरंचास्य
पुरश्चर्याविधिःस्मृतः ॥ ३४ ॥ हव
नादिदशांशेन कृत्वातत्साधयेत्स्व
यं । यदिस्यात्सिद्धकवचो विष्णुरे
वभवेत्स्वयं ॥ ३५ ॥ मंत्रसिद्धिर्भवे

तस्य पुरश्चर्या विधानतः । स्पर्धा मुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ॥३६॥ पुष्पांजल्यष्टकं दत्वा मूले नैवपठेत्सकृत् । दशवर्ष सहस्रस्य पूजायाः फलमाप्नुयात् ॥३७॥ भूर्जेविलिख्य गुलिका स्वर्णस्थां धारयेद्यदि । कण्ठे वा दक्षिणे बाहौ सो पि विष्णुर्न संशयः ॥३८॥ अश्वमेधसहस्राणि वाजपेयशतानि च । महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ॥३९॥ कलां नार्हन्ति तान्येव सकृदुच्चारणात्ततः । कवच

स्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ ॥४०॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् । इदं कवचमज्ञात्वा यजेद्यः पुरुषोत्तमम् । शतलक्षप्रजप्तोऽपि न मन्त्रस्तस्य सिद्धयति ॥४१॥ इति नारदपञ्चरात्रे ज्ञानामृतसागरे त्रैलोक्यमंगलं नाम कवचं सम्पूर्णम् ।

अथ कृष्णाष्टकप्रा० ।

श्रीगणेशाय नमः ॥ श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो धियां साक्षी शुद्धो हरिरसुरह

न्ताब्जनयनः । गदी शंखी चक्री विमलवनमाली स्थिररुचिः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥१॥ यतः सर्वं जातं वियदनिलमुख्यं जगदिदं स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा ॥ लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥२॥ असूनायम्यादौ यमनियममुख्यैः सुकरणै र्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् । यमीड्यं पश्यन्ति

प्रवरमतयो मायिनमसौ शरण्यो लोकेशो मम० ॥३॥ पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा यमित्यादौ वेदो वदति जगतामीशममलम्। नियन्तारं ध्येयं मुनिसुरनृणांमोक्षदमसौ शरण्यो लोकेशो मम० ॥४॥ महेन्द्रादिर्दैवो जयति दितिजान् यस्य बलतो न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते। कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः शरण्यो लोकेशो मम० ॥५॥ विना यस्य ध्यानं व्रज

ति पशुतां सूकर मुखां विना यस्य
ज्ञानं जनिमृतिभयं याति जनता ।
विना यस्य स्मृत्या कृमिशतजनिं
याति स विभुः शरण्यो लोकेशो म
म० ॥६॥ नरातंकोतंकः शरणशर
णोभ्रान्तिहरणो घनश्यामो वामो
व्रजशिशुवयस्योऽर्जुनसखः ॥ स्व
यम्भूर्भूतानां जनकउचिताचारसु
खदः शरण्यो लोकेशोमम० ॥७॥
यदा धर्मग्लानिर्भवति जगतां क्षोभ
करणी तदा लोकस्वामी प्रकटितव
पुःसेतुधृगजः । सतांधाता स्वच्छो

निगमगुणगीतोव्रजपतिः शरण्यो लोकेशो मम० ॥८॥ इति हरिरखिलात्माराधितः शंकरेण श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः ॥ यतिवरनिकटे श्रीयुक्तआविर्बभूव स्वगुणवृतउदारः शंखचक्राब्जहस्तः ॥९॥ इतिश्रीमच्छंकराचार्यविरचितं कृष्णाष्टकं सम्पूर्णम् ।

अथ जगन्नाथाष्टक प्रा० ।

श्रीगणेशाय नमः । कदाचित्कालिन्दी तटविपिनसंगीतकरवो मुदाभीरीनारी वदनकमला स्वादमधु

पः । रमाशम्भुब्रह्मामरपतिगणेशा
र्चितपदो जगन्नाथःस्वामी नयन
पथगामी भवतु मे ॥१॥ भुजे सव्ये
वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विद
धते । सदाश्रीमद्वृन्दा वनवसति
लीलापरिचयो जगन्नाथःस्वामी०
॥२॥ महाम्भोधेस्तीरे कनकरुचि
रेनीलशिखरे वसन्प्रासादान्तःसह
जबलभद्रेण बलिना । सुभद्रामध्य
स्थः सकलसुरसेवावसरदो जगन्ना
थः स्वामी० ॥३॥ कथापारावारः

सजलजलदश्रेणिरुचिरो रमावाणी
रामस्फुरदमलपद्मेक्षणमुखैः । सुरे
न्द्रैराराध्यः श्रुतिगणशिखा गीतच
रितो जग० ॥ ४ ॥ रथारूढोगच्छ
न्पथि मिलितभूदेवपटलः स्तुतिःप्रा
दुर्भावं प्रतिपदमुपाकर्ण्य सदयः ॥
दयासिन्धुर्बन्धुः सकलजगतां सि
न्धुसुतया जग० ॥५॥ परब्रह्मापीडः
कुवलयदलोत्फुल्लनयनो निवासी
नीलाद्रौ निहितचरणोऽनन्त शिर
सि । रसानन्दो राधा सरस वपुरा
लिंगनसुखो जग० ॥६॥ नवै प्रार्थ्यं

राज्यं न च कनकतां भोगविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् । सदा काले काले प्रमथपतिनागीतचरितो जग० ॥ ७ ॥ हर त्वं संसारं द्रुततरमसारं सुरपते हर त्वं पापानां विततिमपरां यादवपते । अहो दीनानाथं निहितमचलं निश्चितपदं जगन्नाथःस्वामी नयनपथगामी भवतु मे ॥८॥ इतिश्री जगन्नाथाष्टकं सम्पूर्णम् ।

अथ मोहिनीकृतश्रीकृष्णस्तोत्र प्रा० ।

श्रीगणेशाय नमः । मोहिन्युवा

च । सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसं । तदेव कर्मणां बीजं तदुद्भव नमोस्तुते ॥ १ ॥ स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः । नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोस्तुते ॥२॥ सर्वाजित जगज्जेतर्जीवजीव मनोहर ॥ रतिबीजरतिस्वामिन् रतिप्रिय नमोस्तुते॥३॥शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय ॥ योषिद्वाहनयोषास्त्रयोषिद्बन्धो नमोस्तुते ॥४॥ पतिसाध्यकराशेषरूपाधार गुणाश्रयः । सुगन्धि

वातसचिव मधुमित्र नमोस्तुते५॥
शरणयोनिकृताधार स्त्रीसंदर्शनव
र्धन । विदग्धानां विरहिणांप्राणान्त
कनमोस्तुते ॥६॥ अकृपा येषु तेऽन
र्थं तेषांज्ञानविनाशनम् । अनुरू
पभक्तेषु कृपासिन्धो नमोस्तुते ७॥
तपस्विनां च तपसां विघ्नबीजाव
लीलय । नमःसकामं मुक्तानांकर्तु
शक्त नमोस्तुते ॥८॥ तपः साध्या
स्तथाराध्याःसदैवं पाञ्चभौतिकाः
पञ्चेन्द्रियकृताधार पञ्चबाणनमो
स्तुते ॥९॥ मोहिनीत्येवमुक्त्वा तु

मनसा सा विधःपुरः । विरराम न म्रवक्त्रा बभूव ध्यानतत्परा ॥१०॥ उक्तं माध्यन्दिनेकान्ते स्तोत्रमेतन्मनोहरं । पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादनं ॥११॥ स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् । अभीष्टं लभते नूनं निष्कलंको भवेद्ध्रुवं ॥१२॥ चेष्टां न कुरुते कामः कदाचिदपि तं प्रियं । भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः । वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥१३॥ इति श्रीमोहिनी

कृतं कृष्णस्तोत्रं सम्पूर्णं ।

अथ ब्रह्मदेवकृतकृष्णस्तोत्र प्रा० ।

श्रीगणेशाय नमः । ब्रह्मोवाच ।
रक्ष रक्ष हरे मां च निमग्नं कामसागरे । दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसंकटे ॥१॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे । अतीव निर्मलज्ञानचक्षुः प्रच्छन्नकारणे ॥२॥ जन्मोर्मिसंगसहिते योषिन्नक्रौघसंकुले । रतिस्रोतः समायुक्ते गम्भीरे घोर एव च ॥३॥ प्रथमामृतरूपे च परिणाम विषालये । यमालयप्रवे

शाय मुक्तिद्वारातिविस्मृते ॥४॥ बु
द्ध्यातरण्याविज्ञानैरुद्धरास्मानतः
स्वयम् । स्वयं च त्वं कर्णधारः प्र
सीद मधुसूदन ॥५॥ मद्विधाः क
ति चिन्नाथ नियोज्या भवकर्मणि ।
सन्ति विश्वेश विधयो हे विश्वेश्वर
माधव ॥६॥ नकर्मक्षेत्रमेवेदं ब्रह्मलो
कोयमीप्सितः । तथापि नः स्पृहा
कामे त्वद्भक्तिव्यवधायके ॥७॥ हे
नाथ करुणासिन्धो दीनबन्धोकृपां
कुरु । त्वं महेश महाज्ञाता दुःस्व
प्नं मां न दर्शय ॥८॥ इत्युक्त्वाज

गतां धाता विरराम सनातनः। ध्या
यं ध्यायं मत्पदाब्जं शश्वत्सस्मार
मामिति ॥९॥ ब्रह्मणा च कृतं स्तो
त्रं भक्तियुक्तश्च यः पठेत्। स चैवा
कर्णविषये ननिमग्नो भवेद्ध्रुवं ॥
॥१०॥ मम मायां विनिर्जित्य स
ज्ञानं लभते ध्रुवं। इह लोके भक्ति
युक्तो मद्भक्तप्रवरो भवेत् ॥११॥ इ
ति श्रीब्रह्मदेवकृतं कृष्णस्तोत्रं सं०

अथ कृष्णस्तोत्र प्रा०।

श्रीगणेशाय नमः। वन्दे नवघ
नश्यामं पीतकौशेयवाससं। सान

न्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परं ॥१॥ राधेशं राधिकाप्राणवल्लभं वल्लवीधवं ॥ राधासेवितपादाब्जं राधावक्षःस्थलस्थितं ॥२॥ राधानुगं राधिकेष्टं राधापहृतमानसं । राधाधारं भवाधारं सर्वाधारं नमामि तं ॥३॥ राधाहृत्पद्ममध्ये च वसन्तं सन्ततं शुभं । राधासहचरं शश्वद् राधाज्ञापरिपालकं ॥४॥ ध्यायन्ते योगिनो योगात् सिद्धाः सिद्धेश्वराश्च यं । तं ध्याये सततं शुद्धं भगवन्तं सनातनं ५ सेवन्ते सततं संतो ब्रह्म

शशेषसंज्ञकाः । सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनं ॥६॥ निर्लिप्तं च निरीहं च परमात्मानमीश्वरं । नित्यं सत्यं च परमं भगवन्तं सनातनं ॥७॥ यं सृष्टेरादिभूतं च सर्ववीजं परात्परं । योगिनस्तंप्रपद्यन्ते भगवन्तं सनातनं ॥८॥ वीजं नानावताराणां सर्वकारणकारणं । वेदावेद्यं वेदवीजं वेदकारणकारणं । योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनं ॥९॥ इत्येव मुक्त्वा गन्धर्वः पपात धरणीतले । ननाम दण्डवद्भूमौ देव

देवंपरात्परं । इति तेन कृतं स्तोत्रं यःपठेत्प्रयतःशुचिः । इहैव जीवन्मुक्तश्चपरंयाति परां गतिं॥११॥ हरिभक्तिंहरेर्दास्यं गोलोके च निरामयः। पार्षदप्रवरत्वं च लभते नात्र संशयः॥१२॥ इति श्रीनारदपञ्चरात्रेज्ञानामृतसारे श्रीकृष्णस्तोत्रंसं

अथ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रप्रा०।

श्रीगणेशाय नमः। अस्यश्री कृष्णाष्टोत्तरशतनाम्नःश्रीशेषऋषिः। अनुष्टुप्छन्दः श्रीकृष्णोदेवता। श्रीकृष्णप्रीत्यर्थे श्रीकृष्णाष्टोत्तर शत

नामजपे० । शेषउवाच । श्रीकृष्णः कमलनाथो वासुदेवः सनातनः ॥ वसुदेवात्मजः पुण्यो लीला मानुष विग्रहः ॥१॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः । चतुर्भुजा त्तचक्रासि गदाशंखाम्बुजायुधः ॥ ॥२॥ देवकीनन्दनःश्रीशो नन्दगोप प्रियात्मजः । यमुनावेगसंहारीबल भद्रप्रियानुजः ॥३॥ पूतनाजीवित हरः शकटासुरभञ्जनः । नन्दव्रज जनानन्दी सच्चिदानन्दविग्रहः ॥ ॥४॥ नवनीतनवाहारी मुचुकुन्दप्र

सादकः । षोडशस्त्रीसहस्रेशस्त्रिभ ङ्गी मधुराकृतिः ॥५॥ शुकवागमृता ब्धीन्दुर्गोविन्दोगोविदाम्पतिः । व त्सपालनसञ्चारी धेनुकासुर भञ्ज नः ॥६॥ तृणीकृततृणावर्तो यमला र्जुनभञ्जनः । उत्तालतालभेत्ताचत मालश्यामलाकृतिः ॥ ७॥ गोपगो पीश्वरो योगी सूर्यकोटिसमप्रभः । इलापतिःपरंज्योति र्यादवेन्द्रोयदू द्वहः ॥८॥ वनमाली पीतवासाः पा रिजातापहारकः । गोवर्धनाचलोद्ध र्त्ता गोपालःसर्वपालकः ॥९॥ अजो

निरञ्जनःकामजनकःकञ्जलोचनः।
मधुहामथुरानाथो द्वारकानायको
बली ॥ १० ॥ बृन्दावनान्तसञ्चारी
तुलसीदामभूषणः । स्यमन्तकम
णेर्हर्ता नरनारायणात्मकः ॥११॥
कुब्जाकृष्णाम्बरधरो मायी परमपू
रुषः । मुष्टिकासुरचाणूरमहायुद्ध
विशारदः ॥ १२ ॥ संसारवैरीकंसा
रिर्मुरारिर्नरकान्तकः । अनादिब्रह्म
चारीच कृष्णाव्यसनकर्षकः १३॥
शिशुपालशिरश्छेत्ता दुर्योधनकुला
न्तकृत् । विदुराक्रूरवरदोविश्वरूप

प्रदर्शकः ॥१४॥ सत्यवाक्सत्यस
ङ्कल्पः सत्यभामारतो जयी । सुभ
द्रापूर्वजो विष्णु र्भीष्ममुक्तिप्रदाय
कः ॥१५॥ जगद्गुरुर्जगन्नाथो वेणु
वाद्यविशारदः । वृषभासुरविध्वंसी
बाणासुरबलान्तकः ॥१६॥ युधिष्ठि
रप्रतिष्ठाता बर्हिबर्हावतंसकः । पा
र्थसारथिरव्यक्तो गीतामृतमहोद
धिः ॥१७॥ कालीयफणिमाणिक्य
रञ्जितश्रीपदाम्बुजः । दामोदरो
यज्ञभोक्ता दानवेन्द्रविनाशनः १८॥
नारायणःपरंब्रह्म पन्नगासन वाह

नः । जलक्रीडा समासक्त गोपीव
स्त्रापहारकः ॥१९॥ पुण्यश्लोकस्ती
र्थकरोवेदविद्यादयानिधिः । सर्वती
र्थात्मकःसर्वग्रहरूपीपरात्परः २०
इत्येवं कृष्णदेवस्य नाम्नामष्टोत्त
रं शतम् । कृष्णेन कृष्णभक्तेन कृ
त्वा गीतामृतं पुरा ॥२१॥ स्तोत्रंकृ
ष्णप्रियकरं कृतं तस्मान्मया पुरा॥
कृष्णनामामृतं नाम परमानन्ददा
यकम् ॥ २२ ॥ अनूपद्रवदुःखघ्नं
परमायुष्यवर्धनं । दानं श्रुतं तप
स्तीर्थं यत्कृतं त्विह जन्मनि २३॥

पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् । पुत्रप्रदमपुत्राणामगतीनांग तिप्रदम् ॥२४॥ धनावहं दरिद्राणां जयेच्छूनां जयावहम् । शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् २५ वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम् । समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥२६॥ अन्ते कृष्णस्मरणदं भवतापभयापहम् । कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने । नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने ॥२७॥ इमं मन्त्रं म

हादेवो जपन्नेव दिवानिशम् । सर्व महानुग्रहभाक् सर्वप्रियतमोऽभवत् ॥२८॥ पुत्रपौत्रैः परिवृतःसर्वसिद्धिसमृद्धिमान् । निर्विश्य भोगानन्तेपि कृष्णसायुज्यमाप्नुयात् ॥ ॥२९॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे उमामहेश्वरसम्वादेधरणीशेषसम्वादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णं ।

अथ मुकुन्दमालाप्रा० ।

श्रीगणेशाय नमः । वन्दे मुकुन्दमरविन्द दलायताक्षं कुन्देन्दुशं

खदशनं शिशुगोपवेषं । इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुं ॥१॥ श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ॥२॥ जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रसादः । जयतु जयतु मेघश्यामलः कोमलांगो जयतु जयतु पृथ्वीभारनाशोमुकुन्दः ॥३॥ मुकुन्द मूर्ध्ना

प्रणिपत्य याचे भवन्तमेकान्तामिय न्तमर्थं । अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेस्तु तव प्रसादात् ॥ ॥४॥ श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतं । तत्पायिनो न मुंचंति मुंचंति पदपायिनः ॥५॥ नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुंभीपाकं गुरुमपि हरे नारकं नार नेतुम् । रम्यारामामृदुतनुलतानन्दने नापि रन्तुं भावे भावे हृदयभवने भावयेयं भवन्तं ॥६॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे य

द्रव्यं तद्भवतु भगवन्पूर्वकर्मानु
रूपं । एतत्प्रार्थ्यं मम बहुमतं ज
न्मजन्मान्तरेऽपि त्वत्पादाम्भोरुह
युगगता निश्चला भक्तिरस्तु ॥७॥
दिवि वा भुवि वा ममास्तु वासो नर
के वा नरकान्तक प्रकामम् । अव
धारितशारदारविन्दौ चरणौ ते मर
णे विचिन्तयामि ॥८॥ सरसिजन
यने सशंखचक्रे मुरभिदि मा विर
मेह चित्त रन्तुं । सुखतरमपरं न
जातु जाने हरिचरणस्मरणामृतेन
तुल्यं ॥९॥ मा भैर्मन्दमनो विचि

न्त्य बहुधा यामीश्चिरं यातना नै वामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्ति सुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥१०॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभाराद्दितानाम् । विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणां ११ रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगा

नां । शरणमशरणानामेक एवातुरा
णां कुशलपथनियुक्त श्चक्रपाणिर्न
राणां ॥१२॥ अपराधसहस्रसंकुले
पतितं भीमभवार्णवोदरे । अगतिं
शरणागतं हरे कृपया केवलमात्म
सात्कुरु ॥१३॥ मा मे स्त्रीत्वं मा
च मेस्यात्कुभावो मा मूर्खत्वं मा कु
देशेषु जन्म । मिथ्यादृष्टिर्मा च
मे स्यात् कदाचिज्जातौ जातौ वि
ष्णुभक्तो भवेयं ॥१४॥ कायेन वा
चा मनसेन्द्रियैश्च बुद्ध्यात्मनावा
नुसृतस्वभावात् । करोमि यद्यत्स

कलं परस्मै नारायणायैव समर्पया
मि ॥१५॥ यत्कृतं यत्करिष्यामि
तत्सर्वं न मया कृतं । त्वया कृतं तु
फलभुक्त्वमेव मधुसूदन ॥१६॥ भ
वजलधिमगाधं दुस्तरं निस्तरेयं क
थमहमितिचेतो मा स्म गाः कातर
त्वं । सरसिजदृशि देवे तारकीभ
क्तिरेका नरकभिदि निषण्णा तार
यिष्यत्यवश्यं ॥१७॥ तृष्णातोये
मदनपवनोद्भूतमोहोर्मिमाले दा
रावर्ते तनयसहजग्राहसंघाकुले च
संसाराख्ये महति जलधौ मज्ज

तां नस्त्रिधामम् पादाम्भोजेवरद
भवतो भक्तिभावं प्रदेहि ॥१८॥ पृ
थ्वीरेणुरणुःपयांसि कणिकाःफल्गुः
स्फुलिङ्गो लघुस्तेजो निश्वसनो म
रुत्तनुतरं रन्ध्रं सुसूक्ष्मं मनः। क्षुद्रा
रुद्रपितामह प्रभृतयः कीटाः सम
स्ताःसुराः दृष्टायत्रस तारको विज
यते श्रीपादधूलीकणः ॥१९॥ आ
म्नायाभ्यसनान्य रण्यरुदितं कृ
च्छ्रव्रतान्यन्वहे मेदश्छेद पदानि
पूर्तविधयः सर्वहुतं भस्मनि। तीर्था
नामवगाहनानि च गजस्नानं विना

यत्पदद्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवःस नारायणः ॥२०॥ आनंद गोविंद मुकुंद राम नारायणानंत निरामयेति। वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥२१॥ क्षीरसागरतरंगसीकरासारतारकितचारुमूर्तये। भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥२२॥ इति श्रीकुलशेखरेण राज्ञा विरचिता मुकुंदमाला सम्पूर्णा।

अथ नारायणवर्म प्रा०।

श्रीगणेशायनमः ॥ राजोवाच ॥
येनगुप्तःसहस्राक्षः सवाहानरिपुसै
निकान् । क्रीडन्निवविनिर्जित्य त्रि
लोक्याबुभुजेश्रियं १ भगवंस्तन्म
माख्याहि वर्मनारायणात्मकं । य
थाऽऽततायिनःशत्रून्येनगुप्तोऽजय
न्मृधे ॥२॥ श्रीशुकउवाच । वृतःपु
रोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छ
ते । नारायणाख्यंवर्माह तदिहैकम
नाःशृणु ॥३॥ विश्वरूप उवाच ॥
धौताङ्घ्रिपाणिराचम्य सपवित्र उ
दङ्मुखः। कृतस्वांगकरन्यासोम

त्राभ्यांवाग्यतःशुचिः ॥ ४ ॥ दैवभूतात्मकर्मभ्यो नारायणमयःपुमान् । पादयोर्जानुनोरूर्वोरुदरेहृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् । ॐनमोनारायणायेति विपर्ययमथापि वा ॥ ६ ॥ प्रणवादियकारांतमंगुल्यंगुष्ठ पर्वसु । न्यसेद्धृदयओंकारं विकारमनु मूर्धनि ॥ ७ ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत् । वकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु ॥ ८ ॥ मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद्बु

धः। सविसर्गं फडंतं तत्सर्वदिक्षुवि
निर्दिशेत् ॥९॥ ॐविष्णवे नमः।
इत्यात्मानं परं ध्यायेद्ध्येयं षट्श
क्तिभिर्युतं। विद्यातेजस्तपोमूर्तिमि
मं मंत्रमुदाहरेत् ॥१०॥ ॐहरिर्वि
दध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः
पतगेंद्रपृष्ठे । दरारिचर्मासिगदेषु
चाप पाशान्दधानोऽष्टगुणोऽष्टबाहुः
॥११॥ जलेषु मां रक्षतु मत्स्यमूर्ति
र्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषुमायाबटुवामनोऽव्या त्रिवि
क्रमःखेऽवतु विश्वरूपः॥१२॥ दुर्गे

ष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१३॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः । रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ ॥१४॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् । दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१५॥ सनत्कुमारोऽवतु कामदेवाद्धयान

नोमां पथि देवहेलनात्। देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १६ ॥ धन्वन्तरिर्भगवान्पात्वपथ्याद् द्वन्द्वाद्भयादृषभो निर्जितात्मा । यज्ञश्चलोकादवताज्जनान्ताद् बलोगणात्क्रोधवशादहीन्द्रः ॥१७॥ द्वैपायनोभगवानप्रबोधाद् बुद्धस्तु पाषण्डगणात्प्रमादात् । कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः१८॥ मां केशवो गदया प्रातरव्याद्गोविंद आसंगवमात्तवेणुः । नारायणःप्राह्ण

उदात्तशक्तिर्मध्यन्दिने विष्णुररींद्र पाणिः ॥१९॥ देवोऽपराह्णे मधुहोग्र धन्वा सायं त्रिधामावतु माधवो मां दोषेहृषीकेश उतार्धरात्रे निशीथ एकोवतु पद्मनाभः ॥२०॥ श्रीवत्स धामापररात्र ईशः प्रत्यूष ईशोसिध रोजनार्दनः। दामोदरोव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥२१॥ चक्रं युगान्तानलतिग्मने मिभ्रमत्समन्ताद्भगवत्प्रयुक्तं ॥ द न्दग्धिदन्दग्ध्यरि सैन्यमासु कक्षं यथा वातसखो हुताशः ॥२२॥ गदे

शनिस्पर्शन विस्फुलिङ्ग निष्पिण्ढ निष्पिण्ढ्यजितप्रियासि ॥ कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥२३॥ त्वं यातुधान प्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेन्द्र विद्रवय कृष्ण पूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥२४॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ॥ चक्षूंषि चर्मन् शतचंद्र छादय द्विषामघोनां हर पापचक्षुषां ॥२५॥ यन्नो भयं ग्रहेभ्योऽभूत्के

तुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च २६ सर्वाण्येतानि भगवन्नाम रूपास्त्र कीर्तनात् ॥ प्रयान्तु सङ्क्षयं सद्यो ये न्ये श्रेयःप्रतीपकाः ॥२७॥ गरुडो भगवांस्तोत्रस्तोमश्छन्दोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनस्य वाहनम् ॥२८॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानिनः ॥ बुद्धीन्द्रियमनःप्राणान्पातु पार्षदभूषणः ॥२९॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन

नःसर्वे यांतु नाशमुपद्रवाः ३० यथै
कात्म्यानुभावानां विकल्परहितः
स्वयं । भूषणायुधलिंगाख्याधत्ते श
क्तीःस्वमायया ३१ तेनैवसत्यमाने
नसर्वज्ञोभगवान्हरिः। पातु सर्वैःस्व
रूपैर्नःसदासर्वत्र सर्वगः ३२ विदिक्षु
दिक्षूर्ध्वमधः समंता दंतर्बहिर्भगवा
न्नारसिंहः । प्रहापयँल्लोकभयं स्व
नेन स्वतेजसा ग्रस्तसमस्ततेजाः॥
॥३३॥ मघवन्निदमाख्यातं वर्म ना
रायणात्मकं । विजेष्यस्यञ्जसाये
न दंशितोसुरयूथपान् ॥ ३४ ॥ एत

द्धारयमाणस्तु यं यं पश्यति चक्षुषा पदावा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥३५॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् । राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३६॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः । योगधारणया स्वांगं जहौ स मरुधन्वनि ॥३७॥ तस्योपरि विमानेन गंधर्वपतिरेकदा । ययौ चित्ररथः स्त्रीभिर्वृतोयत्र द्विजक्षयः ॥३८॥ गगनान्यपतत्सद्यः सविमानो ह्यवाक्शिरा

राः । स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ ३९ ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् । य इदं शृणुयात्काले यो धारयति चादृतः । तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥४०॥ श्रीशुक उवाच ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४१॥ इति श्रीमद्भागवते षष्ठस्कंधे नारायणवर्म सं० ॥

अथ गोपालविंशति प्रा० ।

श्रीमते रामानुजाय नमः । श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥१॥ वन्दे बृन्दावनचरं बल्लवीजनवल्लभम् । जयंती सम्भवं धाम वैजयन्तीविभूषणम् ॥ ॥२॥ वाचं निजांकरासिकां प्रसमीक्षमाणो वक्त्रारविन्दविनिवेशितपांचजन्यः । वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति बल्लवचक्रवर्ती ॥३॥ आम्नायगन्धरुचिरस्फुरिताधरोष्ठमस्रा विलक्षणमनु

क्षणमन्दहासम् । गोपालडिम्भव
पुषं कुहकाञ्जनन्याः प्राणस्तनन्ध
यमवैमि परं पुमांसम् ॥४॥ आवि
र्भवत्यनिभृताभरणंपुरस्ता दाकु
ञ्चितैकचरणं निहतान्यपादम् । द
ध्ना निबद्धमुकुरेण निबद्धतालं ना
थस्य नन्दभवने नवनीतनाट्यम्
॥५॥ कुन्दप्रसूनविशदैर्दशनैश्चतु
र्भिः सन्दश्यमातुरनिशं कुचचूचु
काग्रम् । नन्दस्य वक्त्रमवलोकय
तो मुरारेर्मन्दस्मितं मम मनीषित
मातनोतु ॥६॥ हर्तुं कुम्भे विनिहित

करः स्वादुर्हैयंगवीनं दृष्ट्वा दाम
ग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदो नापगच्छ
न्नतिष्ठन्मिथ्यागोपः सपदि नयने
मीलयन् विश्वगोप्ता ॥७॥ व्रजयो
षिदपांगवेदनीयं मथुराभाग्यमन
न्यभोग्यमीडे । वसुदेववधूस्तनन्ध
यं तत् किमपि ब्रह्म किशोरभावदृ
श्यं ॥८॥ परिवर्तितकन्धरं भयेन
स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चि द्विपु
लोलूखलकर्षकं कुमारम् ॥९॥

निकटेषु निशामयामि नित्यं निग
मान्तैरधुनापि मृग्यमाणम् । यम
लार्जुनदृष्टबालकेलिं यमुनासाक्षि
कयौवनं युवानम् ॥१०॥ पदवीम
दवीयसीं विमुक्तेरटवीसम्पदमम्बु
वाहयन्तीम् । अरुणाधरसाभिला
षवंशां करुणां कारणमानुषं भजा
मि ॥११॥ अनिमेषनिषेवणीयम
क्ष्णोरजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तलं कपोले करुणो
न्मादकविग्रहं मनो मे ॥१२॥ अनु
यायिमनोज्ञवंशनालैरवतु स्पर्शित

बल्लवीविमोघैः। अनघस्मितशीतलैरसौमामनुकम्पासरिदम्बुजैरपांगैः ॥१३॥ अधराहितचारुवंशनाला मुकुटालम्बिमयूरपिच्छमालाः। हरिनीलशिला विहंगनीलाः प्रतिभासन्तु ममान्तिमप्रयाणे ॥ ॥१४॥ अखिलेन विलोकयामि कालान्महिलादीनभुजान्तरस्य यूनः अभिलाषपदंव्रजाङ्गना नामभिलाषक्रमदूरमाभिरूप्यम् ॥१५॥ वहसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे। कलयामि विमुग्ध

वल्लवीवलयाभासितमञ्जुवेणवे॥
॥१६॥ जयतु ललितनृत्यं शिक्षको
वल्लवीनां शिथिलमलयसिञ्जाशी
तलैर्हस्ततालैः। अखिलभुवनरक्षा
गोपवेषस्य विष्णोरधरमणिसुधायां
वंशवान्वंशनालः ॥१७॥ चित्राक
ल्पश्रवसि कलयँल्लाङ्गलीकर्णपूरं ब
र्होत्तंसस्फुरितचिकुरो बन्धुजीवं द
धानः। गुञ्जाबद्धामुरसि ललितां धा
रयन् हारयष्टिं गोपस्त्रीणां जयति
कितवः कोऽपि कौमारहारी ॥१८॥
लीलायष्टिं करकिसलये दक्षिणे

न्यस्य धन्यामंसे देव्याः पुलकनि
विडे सन्निविष्टान्यबाहुः। मेघश्या
मो जयति ललितं मेखलादत्तवेणु
गुञ्जापीडस्फुरितचिकुरो गोपक
न्याभुजंगः ॥१९॥ प्रत्यालीढस्मृ
तिमधिगतां प्राप्तगाढांगपालीं प
श्चादीषन्मिलितनयनां प्रेयसींप्रेक्ष
माणः। भस्त्रायन्त्रप्रणिहितकरो
भक्तजीवातुरव्या द्वारिक्रीडानिवि
डवसनो वल्लवीवल्लभो नः २०॥
वासो हृत्वा दिनकरसुतासन्नि
धौ वल्लवीनां लीलास्मेरोजयति

ललितामास्थितः कुन्दशाखाम् । सव्रीडाभिस्तदनुवसनं ताभिरभ्यर्थमानः कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥२१॥ इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् ॥ दिव्यवेणुरसिकैः समीक्षते दैवतं किमपि यौवनप्रियम् ॥ २२ ॥ इति गोपालविंशतिः सम्पूर्णा ॥

अथ विप्रपत्नीकृतकृष्णस्तोत्र प्रा० ।

श्रीगणेशाय नमः ॥ विप्रपत्न्य ऊचुः ॥ त्वंब्रह्म परमं धाम निरी

ह्यो निरहङ्कृतिः ॥ निर्गुणश्च नि
राकारःसाकारःसगुणःस्वयम् ॥१॥
साक्षिरूपश्च निर्लिप्तः परमात्मा
निराकृतिः ॥ प्रकृतिःपुरुषस्त्वं च
कारणं च तयोः परम् ॥२॥ सृष्टि
स्थित्यन्तविषये ये च देवास्त्रयः
स्मृताः ॥ ते त्वदंशाःसर्ववीजा ब्र
ह्मविष्णुमहेश्वराः ॥३॥ यस्य लो
म्नां च विवरे चाखिलं विश्वमीश्व
र ॥ महाविराणमहाविष्णुस्त्वं तस्य
जनको विभो ॥४॥ तेजस्त्वं चापि
तेजस्वी ज्ञानं ज्ञानीच तत्परः ॥ वे

देऽनिर्वचनीयस्त्वं कस्त्वां स्तोतु
मिहेश्वः ॥५॥ महदादिसृष्टिसूत्रंप
ञ्चतन्मात्रमेव च ॥ बीजंत्वं सर्वश
क्तीनां सर्वशक्तिस्वरूपकः ॥ ६ ॥
सर्वशक्तीश्वरः सर्वः सर्वशकत्याश्र
यःसदा ॥ त्वमनीहः स्वयंज्योतिः
सर्वानन्दः सनातनः ॥ ७ ॥ अहो
आकार हीनस्त्वं सर्वविग्रहवानपि।
सर्वेन्द्रियाणां विषयं जानासि ने
न्द्रियी भवान् ॥८॥ सरस्वती ज
डीभूता यत्स्तोत्रे यन्निरूपणे। ज
डीभूतो महेशश्च शेषो धर्मो वि

धिः स्वयम् ॥९॥ पार्वती कमला राधा सावित्री वेदसूरपि ॥ वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥१०॥ वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर ॥ प्रसन्नोभव नो देव दीनबन्धो कृपां कुरु ११ इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥१२॥ विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नात्रसंशयः ॥१३॥ इति श्रीब्रह्मवै

वर्ते महापुराणे कृष्णजन्मखण्डे वि
प्रपत्नीकृतकृष्णस्तोत्रं सं० ।

अथ भगवन्मानसपूजा प्रा० ।

श्रीगणेशाय नमः । हृदम्भोजे
कृष्णः सजलजलदश्यामलतनुः स
रोजाक्षः स्रग्वीमुकुटकटकाद्याभर
णवान् । शरद्राकानाथप्रतिमवद
नः श्रीमुरलिकां वहन्ध्येयोगोपीग
णपरिवृतः कुंकुमचितः ॥१॥ पयोऽ
म्भोधेर्द्वीपान्मम हृदयमायाहि भ
गवन्मणिव्रात भ्राजत्कनकवरपीठं
भज हरे । सुचिन्हौ ते पादौ जडुकु

लजने नेज्मि सुजलैर्गृहाणेदं दूर्वां फलजलवदर्घ्यं मुररिपो ॥२॥ त्व माचामोपेंद्र त्रिदशसरिदम्भोति शिशिरं भजस्वेमं पञ्चामृतरचित माप्लाव मधुहन् । द्युनद्याः कालि न्द्या अपि कनककुम्भस्थितमिदं जलं तेन स्नानंकुरु कुरु कुरुष्वाच मनकं ॥३॥तडिद्वर्णैवस्त्रे भज वि जयकान्ताधिहरण प्रलम्बारिभ्रात र्मृदुलमुपवीतं कुरु गले। ललाटे पा टीरं मृगमदयुतं धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिचरितम

॥४॥ दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेंदुप्रभवरजसा देव कलये। इमौ पाणी वाणीपतिनुतसकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥५॥ सदा तृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम्। यशोदासूनो तत्परमदययाऽशान सखिभिः प्रसादं वांछद्भिः सह तदनु नीरं पिब विभो ॥६॥सच्चन्द्रं ताम्बूलं मुखरुचिकरं भक्षय हरे फलं स्वादुप्रीत्या परिमलवदास्वा

दय च्चिरं । सपर्यापर्याप्त्यै कनकम
णिजातं स्थितमिदं प्रदीपैरारार्तिं ज
लधितनयाश्लिष्ट रचये ॥७॥ विजा
तीयैः पुष्पै रतिसुरभिभिर्बिल्वतुल
सीयुतैश्चेमं पुष्पांजलिमाजित ते मू
र्ध्निनिदधे । तव प्रादक्षिण्यक्रमणम
घविध्वंसिरचितं चतुर्वारं विष्णो ज
निपथगतिश्रान्तविदुषा ॥८॥ नम
स्कारोऽष्टांगः सकलदुरितध्वंसनप
टुः कृतं नृत्यं गीतं स्तुतिरपि रमा
कान्त त इयम् । तवप्रीत्यै भूयादह
मपि च दासस्तव विभो कृतं छिद्रं

पूर्ण कुरु कुरु नमस्तेऽस्तु भगवन्॥ ॥९॥ सदा सेव्यः कृष्णः सजलघन नीलःकरतले दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम् । कदाचित्कान्तानां कुचकलशपत्रालिरचना समासक्तःस्निग्धैःसह शिशुविहारंविरचयन्॥१०॥मणिकर्णीच्छया जातमिदं मानसपूजनं । यः कुर्वीतोषसि प्राज्ञस्तस्य कृष्णःप्रसीदति ११ इति श्रीमच्छङ्कराचार्य०भगवान्मानसपूजनं स० ।

अथ श्रीबालरक्षा स्तो० ।

श्रीगणेशाय नमः । श्रीकृष्णाय नमः । अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः । हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजे मुखमुरुक्रम ईश्वरः कम् ॥१॥ चक्र्यग्रतः सहगतो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहा जनश्च । कोणेषु शंख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥२॥ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु । श्वेतद्वीपपतिश्चि

त्वं मनो योगेश्वरोऽवतु ॥३॥ पृश्नि
गर्भश्च ते बुद्धिमात्मानं भगवान्प
रः। क्रीडन्तं पातु गोविन्दः शयानं
पातु माधवः ॥४॥ व्रजन्तमव्याद्वै
कुण्ठ आसीनं त्वां श्रियः पतिः। भुं
जानं यज्ञभुक्पातु सर्वग्रहभयंकरः
५॥ डाकिन्यो जातुधान्यश्च कूष्मा
ण्डा येऽर्भकग्रहाः। भूतप्रेतपिशाचा
श्च यक्षरक्षोविनायकाः ॥६॥ कोट
रा रेवती ज्येष्ठा पूतनामातृकादयः
उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रि
यद्रुहः ॥७॥ स्वप्नदृष्टा महोत्पात

वृद्धबालग्रहाश्चये । सर्वे नश्यन्तु ते विष्णो नामग्रहणभीरवः ॥८॥ इति श्रीमद्भागवते दशमस्कन्धे गोपीकृतबालरक्षा सम्पूर्णा ।

अथ विष्णोरष्टाविंशतिनामस्तोत्र प्रा० ।

श्रीगणेशाय नमः । अर्जुन उवाच । किंनु नामसहस्राणि जपन्ते च पुनःपुनः । यानि नामानि दिव्यानि तानि चाचक्ष्वकेशव ॥१॥ श्रीभगवानुवाच । मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम् । गोविन्दं पुण्डरीकाक्षं माधवं मधुसूदनं ॥२॥ पद्म

नाभं सहस्राक्षं वनमालं हलायुधं ।
गोवर्धनं हृषीकेशं वैकुण्ठं पुरुषोत्त
मम् ॥३॥ विश्वरूपं वासुदेवं रामं
नारायणं हरिम् । दामोदरं श्रीधरं
च वेदाङ्गं गरुडध्वजं ॥४॥ अनन्तं
कृष्णगोपालं जपतो नास्ति पातकं।
गवां कोटिप्रदानस्य अश्वमेधशत
स्य च ॥५॥ कन्यादानसहस्राणां
फलं प्राप्नोति मानवः। अमायां वा
पौर्णमास्यामेकादश्यां तथैव च ६॥
सन्ध्याकाले स्मरेन्नित्यं प्रातःकाले
तथैव च। मध्यान्हे च जपन्नित्यं

सर्वपापैःप्रमुच्यते ॥७॥ इति श्रीकृष्णार्जुनसम्वादे विष्णोरष्टाविंशतिनामस्तोत्रं सं० ।

अथ हरिस्तुतिप्रा० ।

श्रीगणेशाय नमः ॥ स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् । यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥१॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ॥ येनव्याप्तं येन विबुद्धं सु

स्वदुःखैस्तं संसारध्वान्तविनाशं ह
रिमीडे ॥२॥ सर्वज्ञो यो यश्च हि
सर्वः सकलो यो यश्चानन्दोऽनन्त
गुणो यो गुणधामा ॥ यश्चाव्यक्तो
व्यस्तसमस्तः सदसद्यस्तं संसा०
॥३॥ यस्मादन्यन्नास्त्यपि नैनं प
रमार्थं दृश्यादन्यो निर्विषयज्ञानम
यत्वात् ॥ ज्ञातृज्ञानज्ञेयविहीनोऽपि
सदाज्ञस्तं संसा० ॥४॥ आचार्यै
भ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैरा
ग्येणाभ्यासबलाच्चैव द्राढिम्ना ॥
भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं

तं संसा० ॥५॥ प्राणानायम्योमि
ति चित्तं हृदि रुद्ध्वा नान्यत्स्मृ
त्वा तत्पुनरत्रैवविलाप्य ॥ क्षीणे
चित्ते भाहशिरस्मीति विदुर्यं तं सं
सा० ॥६॥ यं ब्रह्माख्यं देवमनन्यं
परिपूर्णं हृत्स्थंभक्तै र्लभ्यमजं सु
क्ष्ममतर्क्यम् ॥ ध्यात्वात्मस्थं ब्र
ह्मविदो यं विदुरीशं तं संसा०॥७॥
मात्रातीतं स्वात्मविकाशात्मविबो
धंज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यं ।
भावग्राह्यानन्दमनन्यं च विदुर्यं तं
संसा० ॥८॥ यद्यद्वेद्यं वस्तु सतत्वं

विषयाख्यं तत्तद् ब्रह्मैवेति विहित्वा तदहं च। ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसा० ॥९॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य। तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसा० ॥१०॥ हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभं। त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्ता स्तं संसा० ११ सर्वत्रास्ते सर्वशरीरी न च सर्वो वेत्त्येवेह नयं वेत्ति च सर्वः। सर्वत्रांत

यामितयेत्थं यमयन्य स्तं संसा० १२॥सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद् दृष्ट्वात्मानं चैवमजं स र्वजनेषु। सर्वात्मैकोऽस्मीतिविदुर्यं जनहृत्स्थं तं संसा० ॥१३॥ सर्वत्रै कः पश्यति जिघ्रत्यथ भुंक्ते स्पष्टा श्रोताबुध्यति चेत्याहुरिमंयम्। सा क्षीचास्ते कर्तृषु पश्यन्निति चान्ये तं संसारध्वांतवि० ॥१५॥ पश्यन् शृण्वन्नत्रविजानन्रसयन्सन् जिघ्र न् बिभ्रद्देहमिमं जीवतयेत्थम्। इ त्यात्मानं यं विदुरीशं विषयज्ञं तं

सं० ॥१५॥ जाग्रद्दृष्ट्वा स्थूलप
दार्थानथ मायां दृष्ट्वा स्वप्नेऽथा
पि सुषुप्तौ सुखनिद्राम् । इत्यात्मा
नं वीक्ष्य मुदास्ते च तुरीयं तं सं० ॥
॥१६॥ पश्यन् शुद्धोऽप्यक्षर एको गु
णभेदान्नानाकारान् स्फाटिकवद्भा
ति विचित्रः । भिन्नश्छिन्नश्चायमय
गः कर्मफलैर्यस्तं सं० ॥१७॥ ब्रह्मा
विष्णू रुद्रहुताशौ रवि चन्द्राविंद्रो
वायुर्यज्ञ इतीत्थं परिकल्प्य । एकं
सन्तंयं बहुधाहुर्मतिभेदात्तं सं० ॥
॥१८॥ सत्यं ज्ञानं शुद्धमनन्तं व्य

तिरिक्तं शान्तं गूढं निष्कलमानन्द मनन्यम् । इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं सं० ॥१९॥ कोशानेतान्पंच रसादीनहिताय ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थः । पित्रादिष्टो वेद भृगुर्यं यजुरन्ते तं सं० ॥२०॥ येनाविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जंतुषु कर्तुः । कर्ता भोक्तात्माऽत्र हि चिच्छक्त्यधिरूढस्तं सं० ॥२१॥ सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशे

षं। सत्त्वात्यच्चाभूत्परमात्मा स य एकस्तं सं० ॥२२॥ वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्वततन्त्रैश्च यमीशं। दृष्ट्वाथान्तश्चेतसि बुद्ध्वा विविशुर्यं तं संसा० ॥ २३ ॥ श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु य ईशः। दुर्विज्ञेयो जन्मशतैश्चापि विनातैस्तं सं० यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः। तज्जादित्वादब्धितरंगाभममाभिन्नं

तं सं० ॥२५॥ दृष्ट्वागीतास्वक्षरतत्त्वं विधिनाऽजंभक्त्या गुर्व्यालभ्य हृदिस्थं दृशिमात्रं। ध्यात्वातस्मिन्नस्म्यहमित्यत्र विदुर्यं तंसं०२६॥ क्षेत्रज्ञत्वं प्राप्यविभुः पंचमुखैर्यो भुङ्क्तेऽजस्त्रंभोग्यपदार्थान् प्रकृतिस्थः क्षेत्रे क्षेत्रेऽप्स्विन्दुवदेको बहुधास्ते तं सं० ॥२७॥ युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः क्षेत्र क्षेत्रज्ञांतरविद्भिः पुरुषाख्यः। योऽहंसोऽसौ सोऽस्म्यहमेवेति विदुर्यं तंसं०२८॥ एकीकृत्यानेकशरीरस्थामिमं ज्ञं यं

विज्ञायेहैव स एवाशु भवन्ति ॥ य
स्मिँल्लीनानेहपुनर्जन्म लभन्ते तं
सं० ॥२९॥ द्वन्द्वैकत्वं यच्च मधुब्रा
ह्मणवाक्यैः कृत्वा शक्रोपासनमा
साद्य विभूत्या ॥ योऽसौ सोहंसो
ऽस्म्यहमेवेति विदुर्यं तं सं०॥३०॥
योयं देवेचेष्टयितान्तः करणस्थः
सूर्येचासौ तापयिता सोस्म्यहमेव
॥ इत्यात्मैक्योपासनयायं विदुरी
शं तंसं० ३१ विज्ञानांशो यस्य स
तः शक्त्याधिरूढो बुद्धिर्बुध्यत्यत्र
बाहिर्बोध्यपदार्थान् ॥ नैवान्तस्थं

बुध्यति यं बोधयितारं तंसं०॥३२॥
कोयं देहे देव इतीत्थं सुविचार्य
ज्ञाता श्रोता नन्दयिता चैषहि दे
वः ॥ इत्यालोच्य ज्ञांश इहा
स्मीति विदुर्यं तं सं० ॥ ३३ ॥
को ह्येवान्यादात्मनि न स्यादयमे
ष ह्येवानन्दः प्राणिति चापानितिचे
ति । इत्यास्तित्वं वक्त्युपपत्त्या श्रु
तिरेषा तं सं० ॥३४॥ प्राणो वाहं
वाक्श्रवणादीनि मनो वा बुद्धिर्वाहं
व्यस्त उताहोपिसमस्तः । इत्या
लोच्य ज्ञप्तिरिहास्मीतिविदुर्यं तं

सं० ॥३५॥ नाहं प्राणो नैव शरीरं न मनो हं नाहं बुद्धिर्नाहमहंकारधियौ च। योत्र ज्ञांशः सोस्म्यहमेवेति विदुर्यं तं सं० ॥३६॥ सत्तामात्रं केवलविज्ञानमजं स त्सूक्ष्मंनित्यं तत्त्वमसीत्यात्मसुताय। साम्नामन्ते प्राह पिता यं विभुमाद्यं तं सं०॥ ॥३७॥ मूर्त्तामूर्त्तं पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेतिच नेतीति विहाय। चैतन्यांशे स्वात्मनिसन्तं च विदुर्यं तं सं० ॥३८॥ ओतं प्रोतं यत्र च सर्वं गगनान्तं यो स्थूलान

ण्वादिषु सिद्धोक्षरसंज्ञः। ज्ञातातो
न्यो नेत्युपलभ्यो न च वेद्यस्तं सं०
तावत्सर्वं सत्यमिवाभाति यथैत
द्यावत्सोऽस्मीत्यात्मनि यो ज्ञो न
हि दृष्टः। दृष्टे तस्मिन् सर्वमस
त्यं भवतीदं तं सं० ॥ ४०॥ रागा
मुक्तं लोहयुतं हेम यथाग्नौ योगा
ष्टांगै रुज्ज्वलितज्ञानमयाग्नौ ॥
दग्ध्वात्मानं ज्ञंपरिशिष्टं च विदुर्यं
तं सं० ॥४१॥ यं विज्ञानज्योतिष
माद्यं सुविभातं हृदयेन्द्वग्न्योकस
मीड्यं तडिदाभं। भक्त्याराध्येहैव

विशन्त्यात्मनि सन्तं तं सं० ४२॥
पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्यास्तौतीत्याङ्गिरसं विष्णुरिमं माम्। इत्यात्मनि स्वात्मनि संहृत्य सदैकस्तं सं० ॥४३॥
इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वान्तार्काभं भगवत्पादीयमिदं यः विष्णोर्लोकं पठति शृणोति व्रजति ज्ञानज्ञेयंस्वात्मनि चाप्नोति मनुष्यः ॥४४॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्य विरचिता हरिस्तुतिःसमाप्ता।

अथहरिनाममालास्तोत्रप्रा०।

ओंतत्सत्। गोविन्दं गोकुलानन्दं गोपालंगोपिवल्लभम्। गोवर्धनोद्धरं धीरं तं वन्दे गोमतीप्रियम्॥१॥ नारायणं निराकारं नरवीरं नरोत्तमम्। नृसिंहं नागनाथं च तं वन्दे नरकान्तकम्॥२॥ पीताम्बरं पद्मनाभं पद्माक्षं पुरुषोत्तमम्। पवित्रं परमानन्दं तं वन्दे परमेश्वरम्॥३॥ राघवंरामचन्द्रं च रावणारिं रमापतिम्। राजीवलोचनं रामं तं वन्दे रघुनन्दनम्॥४॥ वामनं विश्वरूपं च

वासुदेवं च विठ्ठलम् । विश्वेश्वरं वि
ष्णुं व्यासं तं वन्दे वेदवल्लभम् ५॥
दामोदरं दिव्यसिंहं दयालुं दीनना
यकम् । दैत्यारिं देवदेवेशं तं वन्दे
देवकीसुतं ॥६॥ मुरारिं माधवं म
त्स्यं मुकुन्दं मुष्टिमर्दनं । मुञ्जके
शं महाबाहुं तं वन्दे मधुसूदनं॥७॥
केशवं कमलाकान्तं कामेशं कौस्तु
भप्रियं । कौमोदकीधरं कृष्णं तं व
न्दे कौरवान्तकं ॥८॥ भूधरं भुवना
नन्दं भूतेशं भूतनायकं । भावनैकं
भुजंगेशं तं वंदे भवनाशनं ॥९॥ ज

नार्दनं जगन्नाथं जगज्जाड्यविना
शकं। जामदग्निवरंज्योतिस्तं वंदे
जलशायिनं ॥१०॥ चतुर्भुजं चिदा
नंदं मल्लचाणूरमर्दनं । चराचरग
तं देवं तं वंदेचक्रपाणिकं ॥११॥श्रि
यं करं श्रियो नाथं श्रीधरंश्रीवरप्रदं।
श्रीवत्सलधरं सौम्यं तं वन्दे श्रीसुरे
श्वरं ॥१२॥ योगीश्वरं यज्ञपतिं य
शोदानंददायकं । यमुनाजलकल्लो
लं तं वंदे यदुनायकं ॥१३॥ शाल
ग्रामशिलाशुद्धं शंखचक्रोपशोभितं
सुरासुरसदासेव्यं तं वंदे साधुवल्ल

भं ॥१४॥ त्रिविक्रमं तपोमूर्तिं त्रिविधाघौघनाशनं । त्रिस्थलं तीर्थराजेंद्रं तं वंदे तुलसीप्रियम् ॥ १५ ॥ अनन्तमादिपुरुषमच्युतं च वरप्रदम् । आनन्दं च सदानन्दं तं वन्दे चाघनाशनं ॥१६॥ लीलया धृतभूभारं लोकसत्त्वैकवंदितम् । लोकेश्वरं च श्रीकान्तं तं वन्दे लक्ष्मणप्रियं ॥१७॥ हरिं च हरिणाक्षं च हरिनाथं हरिप्रियं । हलायुधसहायं च तं वन्दे हनुमत्पतिं ॥१८॥ हरिनामकृता माला पवित्रा पापनाशिनी।

बलिराजेन्द्रेण चोक्ता कण्ठे धार्या प्रयत्नतः ॥१९॥ इति श्रीबलिराजेन्द्रविरचितं हरिनाममालास्तोत्रं सम्पूर्णम् ।

अथ विष्णुशतनामस्तोत्रप्रा० ।

श्रीगणेशाय नमः ॥ नारद उवाच ॥ ॐ वासुदेवं हृषीकेशं वामनं जलशायिनम् ॥ जनार्दनं हरिं कृष्णं श्रीवक्षं गरुडध्वजम् ॥१॥ वाराहं पुण्डरीकाक्षं नृसिंहं नरकान्तकम् ॥ अव्यक्तं शाश्वतं विष्णुमनन्तमजमव्ययम् ॥२॥ नारायणं ग

दाध्यक्षं गोविन्दं कीर्तिभाजनं ॥ गो
वर्धनोद्धरं देवं भूधरं भुवनेश्वरम् ॥
॥ ३ ॥ वेत्तारं यज्ञपुरुषं यज्ञेशं
यज्ञवाहकं ॥ चक्रपाणिं गदापा
णिं शंखपाणिं नरोत्तमं ॥४॥ वैकुंठं
दुष्टदमनं भूगर्भं पीतवाससं । त्रिवि
क्रमं त्रिकालज्ञं त्रिमूर्तिं नन्दिकेश्व
रं ॥५॥ रामं रामं हयग्रीवं भीमं रौ
द्रं भवोद्भवं । श्रीपतिं श्रीधरं श्रीशं
मंगलं मङ्गलायुधं ॥६॥ दामोदरं द
मोपेतं केशवं केशिसूदनं । वरेण्यं
वरदं विष्णुमानन्दं वसुदेवजं ॥७॥

हिरण्यरेतसं दीप्तं पुराणपुरुषोत्तमं । सकलं निष्कलं शुद्धं निर्गुणं गुणशाश्वतं ॥८॥ हिरण्यतनुसङ्काशं सूर्यायुतसमप्रभं । मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥ ज्योतीरूपमरूपंच स्वरूपं रूपसंस्थितम् । सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखं ॥ १० ॥ ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुं ॥ योगीशं योगनिष्णातं योगिनं योगरूपिणं ॥ ११ ॥ ईश्वरं सर्वभूतानां वन्दे भूतमयं प्रभुं ॥ इति नाम

शतं दिव्यं वैष्णवं खलु पापहं १२॥ व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम् ॥ यः पठेत्प्रातरुत्थाय स भवेद्वैष्णवो नरः ॥१३॥ सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात् ॥ चान्द्रायणसहस्राणि कन्यादानशतानि च ॥२४॥ गवांलक्षसहस्राणि मुक्तिभागी भवेन्नरः ॥ अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः॥ ॥ १५॥ इति श्रीविष्णुपुराणे विष्णुशतनामस्तोत्रं सम्पूर्णं ॥

अथ महालक्ष्म्याष्टक प्रा० ।

श्रीगणेशाय नमः । इन्द्र उवाच । नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते । शंखचक्रगदाहस्ते महालक्ष्मि नमोऽस्तुते ॥१॥ नमस्ते गरुडारूढे कोलासुरभयंकरि । सर्वपापहरे देवि महालक्ष्मि० ॥२॥ सर्वज्ञ सर्ववरदे सर्वदुष्टभयंकरि । सर्वदुःखहरे देवि महालक्ष्मि० ॥ ३ ॥ सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि । मंत्रमूर्ते सदा देवि महालक्ष्मि० ॥४॥ आद्यंतरहिते देवि आद्यशक्ति महेश्वरि । योगजे योगसं

भूते महालक्ष्मि० ॥५॥ स्थूलसूक्ष्म
महारौद्रे महाशक्ति महोदरे । महा
पाप हरे देवि महालक्ष्मि० ॥६॥ प
द्मासनस्थिते देवि परब्रह्मस्वरूपि
णि । परमेशे जगन्मातर्महालक्ष्मि०
॥७॥ श्वेतांबरधरे देवि नानालंका
रभूषिते । जगत्स्थिते जगन्मातर्म
हालक्ष्मि० ॥ ८॥ महालक्ष्म्याष्टक
स्तोत्रं यःपठेद्भक्तिमान्नरः । सर्वसि
द्धिमवाप्नोतिराज्यंप्राप्नोतिसर्वदा
॥९॥ एककालं पठेन्नित्यं महापाप
विनाशनम् । द्विकालं यःपठेन्नित्यं

धनधान्यसमन्वितः ॥१०॥ त्रिकालं यःपठेन्नित्यं महाशत्रुविनाशनम् । महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥११॥इतीन्द्रकृतंश्रीमहालक्ष्म्यष्टकस्तोत्र सम्पूर्णं ।

अथ त्रिपुरसुन्दरीस्तोत्रप्रा० ।

श्रीगणेशाय नमः ॥ कदम्बवनचारिणींमुनिकदम्बकादम्बिनीं नितम्बजितभूधरां सुरनितम्बिनीसेवितां ॥ नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां त्रिलोचनकुटुम्बिनींत्रिपुरसुन्दरीमाश्रये ॥१॥ कदंब

वनवासिनीं कनकवल्लकीधारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीं । दयाविभवकारिणीं विशदलोचना चारिणीं त्रिलोचनकुटुंबिनीं त्रिपुरसुन्दरीमाश्रये ॥२॥ कदंबवनशालयाकुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदारुणकपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥३॥ कदंबवनमध्यगां कनकमंडलोपस्थितां षडंबुरुहवासिनीं सततसिद्धिसौदाम

नीं । विडंबितजपारुचिं विकचचंद्र
चूडामणिं त्रिलोचनकुटुम्बिनीं त्रि
पुरसुन्दरीमाश्रये ॥४॥ कुचांचित
विपंचिकां कुटिलकुंतलालंकृतां कु
शेशयनिवासिनीं कुटिलचित्तविद्वे
षिणीं । मदारुणविलोचनां मनसि
जारिसंमोहिनीं मतंगमुनिकन्यकां
मधुरभाषिणीमाश्रये ॥५॥ स्मरेत्प्र
थमपुष्पिणीं रुधिरबिंदु नीलांबरां
गृहीतमधुपात्रिकां मधुविघूर्णनेत्रां
चलां । घनस्तनभरोन्नतां गलितचू
लिकां श्यामलां त्रिलोचनकुटुम्बि

नीं त्रिपुरसुन्दरीमाश्रये ॥६॥ सकुंकुमविलेपना मलकचुंबिकस्तूरिकां समंदहसितेक्षणां सशरचापपाशांकुशाम् । अशेषजनमोहिनी मरुणमाल्यभूषांबरां जपाकुसुमभासुरां जपविधौ स्मराम्यंबिकाम् ॥ ॥७॥ पुरंदरपुरंध्रिका चिकुरवंधसैरंध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुंदरमणी मणीलसदलंक्रियाकारिणीं भजामि भुवनाम्बिकां सुरवधूटिका चेटिकाम्॥ ॥८॥ इति श्रीमच्छंकराचार्यविरचि

तं त्रिपुरसुंदरीस्तोत्रं सं० ।

अथ देव्यपराधक्षमापनस्तोत्र प्रा० ।

श्रीगणेशाय नमः । न मंत्रं नो यंत्रं तदपि च नजाने स्तुतिमहो न चा ह्वानं ध्यानं तदपि च न जाने स्तुति कथाः । न जानेमुद्रास्ते तदपि च न जाने विलपनं परं जाने मातस्त्वदनुशरणं क्लेशहरणं ॥१॥ विधेरज्ञानेनद्रविणाविरहेणालसतया विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत् । तदेतत्क्षंतव्यं जननि सकलोद्धारिणि शिवे

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥ पृथिव्यां पुत्रास्ते जननि बहवः संति सरलाः परं तेषां मध्ये विरलतरलोहं तव सुतः। मदीयोयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥ जगन्मातर्मातस्तव चरणसेवा न रचिता नवा दत्तं देवि द्रविणमति भूयस्तव मया। तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥४॥परित्यक्त्वा देवान्वि

विधविधिसेवाकुलतया मया पंचा
शीतेरधिकमपनीते तु वयसि । इदा
नीं चेन्मातस्तव यदि कृपा नापि भ
विता निरालंबो लंबोदरजननि कं
यामि शरणं ॥५॥ श्वपाको जल्पा
को भवति मधुपाकोपमगिरा निरा
तंको रंको विहरति चिरंकोटिकन
कैः । तवापर्णे कर्णे विशति मनुवर्णे
फलमिदं जनः को जानीते जननि
जपनीयं जपविधेः ॥६॥ चिताभस्मा
लेपो गरलमशनं दिक्पटधरो जटा
धारी कंठे भुजगपतिहारी पशुपतिः ।

कपाली भूतेशो भजति जगदीशैक
पदवीं भवानि त्वत्पाणिग्रहणपरिपा
टीफलमिदं ॥७॥ न मोक्षस्याकांक्षा
न च विभववांछापि च न मे न विज्ञा
नापेक्षा शशिमुखि सुखेच्छापि न पु
नः। अतस्त्वां संयाच जननि जननं
यातु मम वै मृडानी रुद्राणी शिवशि
व भवानीति जपतः ॥८॥ नाराधितासि
सि विधिना विविधोपचारैः किं रुक्ष
चिंतनपरैर्न कृतं वचोभिः। श्यामे
त्वमेव यदि किंचन मय्यनाथे धत्से
कृपामुचितमंब परं तवैव ॥९॥ आ

पत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि । नैतच्छठ त्वं मम भावयेथाः क्षुधा तृषार्ता जननीं स्मरंति ॥१०॥ जगदंब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि । अपराधपरंपरावृतं न हि माता समुपेक्षते सुतम् ॥११॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥१२॥ इति श्रीमत्परमहंस परिव्राजकाचार्य श्रीमच्छंकराचार्यविरचितं देव्यपराधक्षमापन

स्तोत्रं सम्पूर्णम् ।

अथ आनंदलहरी प्रारंभः ।

श्रीगणेशाय नमः ॥ भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि ॥ न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिस्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ १ ॥ घृतक्षीरद्राक्षा मधुमधुरिमा कैरपि पदैर्विशिष्यानाख्येयो भवति रसनामात्रविषयः ॥ तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः कथंकारं ब्रू

मःसकलनिगमागोचरगुणे ॥ २ ॥
मुखे ते ताम्बूलं नयनयुगले कज्ज
लकला ललाटे काश्मीरं विलसति
गले मौक्तिकलता ॥ स्फुरत्काञ्ची
शाटी पृथुकटितटेहाटकमयी भजा
मित्वां गौरीं नगपतिकिशोरीमवि
रतं॥३॥ विराजन्मन्दारद्रुमकुसुम
हारस्तनतटीनदद्वीणानाद श्रवण
विलसत्कुण्डलगुणा ॥ नतांगी मा
तंगी रुचिरगतिभंगी भगवती स
ती शम्भोरम्भोरुहचटुलचक्षुर्विज
यते ॥४॥ नवीनार्कभ्राजन्माणिक

नकभूषापरिकरैर्वृताङ्गी सारङ्गी
रुचिरनयनाऽङ्गीकृतशिवा ॥ तडि
त्पीता पीताम्बरललितमञ्जीरसुभ
गा ममाऽपर्णा पूर्णा निरवधिसुखै
रस्तु सुमुखी ॥५॥ हिमाद्रेः सम्भू
ता सुललितकरैः पल्लवयुतासुपुष्पा
मुक्ताभिर्भ्रमरकलिता चालकभरैः
॥ कृतस्थाणुस्थाना कुचफलनता
सूक्तिसरसा रुजां हन्त्री गन्त्री वि
लसति चिदानन्दलतिका ॥६॥ स
पर्णामाकीर्णां कतिपयगुणैः सादर
मिह श्रयन्त्यन्ये वल्लीं मम तु म

तिरेवं विलसति ॥ अपर्णैं का से
व्या जगति सकलैर्यत्परिवृतः पुरा
णोऽपि स्थाणुः फलति किल कैव
ल्यपदवीं ॥ ७ ॥ विधात्री धर्माणां
त्वमसि सकलाम्नायजननी त्वम
र्थानां मूलं धनदनमनीयाङ्घ्रिक
मले ॥ त्वमादिः कामानां जननि
कृतकन्दर्पविजये सतां मुक्तेर्बीजं
त्वमसि परमब्रह्ममहिषी ॥८॥ प्र
भूता भक्तिस्ते यदपिन ममालोल
मनसस्त्वया तु श्रीमत्या सदय
मवलोक्योऽहमधुना ॥ पयोदः पा

नीथे दिशति मधुरं चातकमुखे भृ
शं शंके कैर्वा विधिभिरनुनीता मम
मतिः ॥९॥ कृपापांगालोकं वितर
तरसा साधुचरिते नते युक्तोपेक्षा म
यि शरणदीक्षामुपगते । नचेदिष्टं द
द्यादनुपदमहो कल्पलतिका विशे
षःसामान्यैःकथमितरवल्लीपरिक
रैः १० महान्तं विश्वासं तव चरणपं
केरुहयुगे निधायान्यन्नैवाश्रितमि
ह मया दैवतमुमे । तथाऽपि त्वच्चे
तो यदि मयि न जायेत सदयं निरा
लंबो लंबोदरजननि कं यामि शरणं

॥११॥ अयःस्पर्शे लग्नं सपदि लभ
ते हेमपदवीं यथा रथ्यापाथः शुचि
भवति गंगौघमिलितं । तथा तत्त
त्पापैरतिमलिनमंतर्ममयदि त्वयि
प्रेम्णासक्तं कथमिव न जायेत विम
लं ॥१२॥ त्वदन्यस्मादिच्छाविष
यफललाभेन नियमस्त्वमर्थानामि
च्छाधिकमपि समर्था वितरणे । इ
ति प्राहुः प्राञ्चः कमलभवनाद्या
स्त्वयि मनस्त्वदासक्तं नक्तंदिवमु
चितमीशानि कुरु तत् ॥१३॥ स्फु
रन्नानारत्न स्फटिक मय भित्ति

प्रतिफलत्त्वदाकारंचंचच्छशधरवि
लासौघाशिखरम् । मुकुन्दब्रह्मेंद्रप्र
भृतिपरिवारं विजयते तवागारं रम्यं
त्रिभुवन महाराजगृहिणी ॥१४॥ नि
वासःकैलासे विधिशतमखाद्याःस्तु
तिकराः । कुटुम्बं त्रैलोक्यं कृतकर
पुटःसिद्धिनिकरः । महेशः प्राणेश
स्तदवनिधराधीशतनये नते सौभा
ग्यस्यक्वचिदपि मनागस्ति तुलना
॥१४॥ वृषो वृद्धोयानं विषमशनमा
शानिवसनं श्मशानं क्रीडाभूर्भुज
गनिवहो भूषणविधिः । समग्रा सा

मयी जगति विदितैव स्मररिपोर्यदे
तस्यैश्वर्यं तव जननि सौभाग्यमहि
मा ॥१६॥ अशेषब्रह्मांडप्रलयविधि
नैसर्गिकमतिः श्मशानेष्वासीनः कृ
तभसितलेपः पशुपतिः। दधौ कंठे हा
लाहलमखिलभूगोलकृपया भव
त्याः संगत्याः फलमिति च कल्या
णि कलये ॥१७॥ त्वदीयं सौंदर्यं
निरतिशयमालोक्य परया भियैवा
सीद्गंगाजलमयतनुः शैलतनये । त
देतस्यास्ताम्यद्वदनकमलं वीक्ष्य
कृपया प्रतिष्ठामातेने निजशिरसि

वासेन गिरिशः ॥१८॥ विशालश्री खंड द्रवमृगमदाकीर्णघुसृणप्रसून व्यामिश्रं भगवति तवाभ्यंगसलिलम् । समादाय स्रष्टा चलितपदपांसून् निजकरैः समाधत्ते सृष्टिं विबुधपुर पंकेरुहदृशां ॥१९॥ वसंते सानन्दे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसातिसुभगे । सखीभिः खेलन्तीं मलयपवनांदोलितजले स्मरेद्यस्त्वां तस्य ज्वरजनितपीडाऽपसरति ॥२०॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीम

च्छंकराचार्य विरचितानंदलहरी सम्पूर्णम् ।

अथ देवकृतलक्ष्मीस्तोत्र प्रारंभः ।

श्रीगणेशाय नमः । क्षमस्व भगवत्यंव क्षमाशीले परात्परे । शुद्धसत्वस्वरूपे च कोपादिपरिवर्जिते ॥ ॥१॥ उपमे सर्वसाध्वीनां देवीनां देवपूजिते । त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम् ॥२॥ सर्वसंपत्स्वरूपा त्वं सर्वेषांसर्वरूपिणी ॥ रासेश्वर्यधिदेवी त्वं त्वत्कलाःसर्वयोषितः ॥३॥ कैलासे पार्वती त्वं

च क्षीरोदे सिंधुकन्यका ॥ स्वर्गे च स्वर्गलक्ष्मी त्वं मर्त्यलक्ष्मीश्च भूतले ॥४॥ वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती । गंगा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥५॥ कृष्णप्राणाधिदेवीत्वं गोलोके राधिकास्वयं । रासे रासेश्वरी त्वं च वृंदावनवने वने ॥६॥ कृष्णप्रिया त्वं भांडीरे चंद्रा चंदनकानने । विरजा चंपकवने शतशृंगे च सुन्दरी ॥७॥ पद्मावती पद्मवने मालती मालतीवने । कुन्ददन्ती कुन्दवने सुशीला केत

कीवने ॥८॥ कदम्बमाला त्वं देवि कदम्बकाननेऽपि च । राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे ॥९॥ इत्युक्त्वा देवताःसर्वे मुनयो मनवस्तथा । रुरुदुर्नम्रवदनाःशुष्ककंठोष्ठतालुकाः ॥१०॥ इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् । यःपठेत्प्रातरुत्थाय स वै सर्वं लभेद् ध्रुवम् ॥११॥ अभार्यो लभते भार्यां विनीतां च सुभां सतीम् । सुशीलां सुंदरीं रम्यामतिसुप्रियवादिनीम् १२ पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां

वराम् । अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् १३ परमैश्वर्ययुक्तंच विद्यावंतंयशस्विनं । भ्रष्टराज्योल भेद्राज्यं भ्रष्टश्रीर्लभते श्रियं १५ ह तबन्धुर्लभेद्बंधून्धनभ्रष्टो धनंलभे त । कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद् ध्रुवं॥१५॥सर्वमंगलदं स्तो त्रं शोकसंतापनाशनं । हर्षानंदक रं शश्वद्धर्ममोक्षसुहृत्पदं ॥ १६ ॥ इति श्रीदेवकृतलक्ष्मीस्तोत्रं सं० ।

अथ वाराहीनिग्रहाष्टकप्रा० ।

श्रीगणेशाय नमः ॥ देवि क्रोड

मुखि त्वदङ्घ्रिकमलद्वन्द्वानुरक्ता त्मने मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः ॥ तस्याशु त्वदयोग्रनिष्ठुरहलाघात प्रभूतव्यथापर्यस्यन्मनसो भवन्तु वपुषः ॥ प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवि त्वत्पदपद्मभक्तिविभव प्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशं सभावमलिनांवृत्तिं विधत्ते मयि ॥ यो देही भुवने तदीयहृदयान्निर्गतैर्लोहितैः सद्य पूरयसे कराब्जचषकं वाञ्छाफलैर्मामपि ॥२॥ चण्डोत्तुण्ड

विदीर्ण दुष्टहृदयप्रोद्भिन्नरक्तच्छटा
हालापानमदाट्टहास निनदाटोप प्र
तापोत्कटम् ॥ मातर्मत्परिपन्थि
नामपहृतैःप्राणैस्त्वदङ्घ्रिद्वयं ध्या
नोद्दामरवैर्भवो दयवशात्सन्तर्पया
मि क्षणात् ॥ ३ ॥ श्यामां तामर
साननाङ्घ्रिनयनां सोमार्धचूडाज
गत्त्राणव्यग्र हलायुधाग्रमुसलां स
न्त्रासमुद्रावतीम् ॥ ये त्वांरक्तक
पालिनीं हरवरारोहेवराहाननां भा
वैः संदधते कथं क्षणमपि प्राणन्ति
तेषां द्विषः ॥४॥ विश्वधीश्वरवल्ल

भे विजयसे या त्वं नियन्त्रात्मि
का भूतान्ता पुरुषायुषोवधिकरीपा
कप्रदा कर्मणाम् ॥ त्वां याचे भव
ता किमप्यवितथं को मद्विरोधी ज
न स्तस्यायुर्मम वाञ्छितावधि भ
वेन्मातस्तवैवाज्ञया ॥५॥ मातः स
म्यगुपासितुं जडमतिस्त्वां नैव श
क्नोम्यहं यद्यप्यन्वित दैशिकाङ्
घ्रिकमलानुक्रोशपात्रस्य मे । जंतुः
कश्चनचिंतयत्यकुशलं यस्तस्य त
द्वैशसं भूयाद्देवि विरोधिनो मम च
ते श्रेयः पदासंगिनः ॥६॥ वाराही

व्यथमानमानसगलत्सौख्यं तदा शागणैः सीदंतं तमपाकृताध्यवासितं प्राप्ताखिलोत्पातितम् । क्रंदद्बंधुजनैःकलंकितकुलं कंठव्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशुपतितं भ्रांतं लुठंतं मुहुः ॥७॥ बाराही त्वमशेष जंतुषु पुनः प्राणात्मिका स्पंदसे शक्तिव्याप्तचराचरा खलु ततस्त्वामेतदभ्यर्थये । त्वत्पादांबुजसंगिनो मम सकृत्पापं चिकीर्षन्ति ये तेषां मा कुरु शंकरप्रियतमे देहांतरावस्थितिम् ॥८॥ इति श्रीबारा

हीनिग्रहाष्टकं सम्पूर्णं ।

अथ वाराह्यनुग्रहाष्टकं प्रारंभः ।

श्रीगणेशाय नमः । ईश्वर उवाच । मातर्जगद्रचननाटकसूत्रधारः सद्रूपमाकलयितुं परमार्थतोयम् । ईशोऽप्यनीश्वरपदं समुपैति तादृक्कोन्यस्तवं किमिव तावकमादधातु ॥ ॥१॥ नामानि किंनु गृणतस्तव लोक तुण्डे नाडम्बरं स्पृशति दण्डधरस्य दण्डः । यल्लेशलंबितभवांबुनिधिर्यतो यत्त्वन्नामसंस्मृतिरियं ननु न स्तुतिस्ते श्त्वाञ्चितनादरसमुल्लस

दप्रमेयानंदोदयात्समुदितःस्फुटरो
महर्षः । मातर्नमामि सुदिनानि स
देत्यमुं त्वामभ्यर्थयेऽर्थमितिपूरय
तादयालो ॥३॥ कुन्देन्दुमौलिविधि
केशवमौलिरत्न रोचिश्चयोज्ज्वलि
तपादसरोजयुग्मे । चेतो मतौ म
म सदा प्रतिबिंबिता त्वं भूयाः भवा
नि विदधातु सदोरुहारे ॥४॥ लीलो
द्धृतक्षितितलस्य वराहमूर्तेर्वाराहि
मूर्तिरखिलार्थकरीत्वमेव । प्रालेय
रश्मिसुकलोल्लसितावतंसा त्वं दे
वि वामतनुभागहरा हरस्य ॥ ५ ॥

त्वामेव तप्तकनकोज्ज्वलकांतिमं
तर्यै चिंतयंति युवतीतनुमामलांतां
म् । चक्रायुधत्रिनयनांबरपोतृवक्त्रां
तेषां पदांबुजयुगं प्रणमंति देवाः ॥
॥६॥ त्वत्सेवनस्खलितपापचयस्य
मातर्मोक्षोऽपि यत्र न सतां गणना
मुपैति । देवासुरोरगनृपालनमस्य
पादस्तत्र श्रियः पटुगिरः कियदेव
मस्तु ॥७॥ किं दुष्करं त्वयि मनो
विषयं गतायां किं दुर्लभं त्वयि वि
धानवदर्चितायाम् । किं दुष्करं त्व
यि सकृत्स्मृतिमागतायां किं दुर्जयं

त्वयि कृतस्तुतिवादपुंसाम् ८ इति श्रीवाराह्यनुग्रहाष्टकं सम्पूर्ण ।

॥ अथ ताराष्टक प्रारम्भः ॥

मातर्नीलसरस्वति प्रणमतां सौभाग्यसंपत्प्रदे प्रत्यालीढपदस्थिते शिवहृदि स्मेराननांभोरुहे । फुल्लेन्दीवरलोचनत्रययुते कर्त्रीकपालोत्पले खड्गंचादधती त्वमेव शरणं त्वामीश्वरीमाश्रये ॥१॥ वाचामीश्वरिभक्तकल्पलतिके सर्वार्थसिद्धिप्रदे गद्यप्राकृतपद्यजातरचना सर्वत्रसिद्धिप्रदे । नीलेन्दीवर लोचनत्र

ययुते कारुण्यवारांनिधे सौभाग्या
मृतवर्षणेनकृपया सिंचत्वमस्माह
शं ॥२॥ शर्वैगर्वसमूहपूरिततनो स
र्पादिवर्षोज्ज्वले व्याघ्रत्वक्परिवीत
सुन्दरकटिव्याधूतघंटांकिते। सद्यः
कृत्तगलद्रजःपरिमिलन्मुण्डद्वयीमू
र्धजग्रन्थिश्रेणि नृमुण्डदावललिते
भीमेभयंनाशय ॥३॥ मायानंगवि
काररूपललने बिन्द्वर्धचन्द्रात्मिके
हुंफट्कारमयि त्वमेवशरणं मन्त्रा
त्मिकेमादृशः। मूर्तिस्तेजननीत्रि
धामघटिता स्थूलाऽति सूक्ष्मा परा

वेदानां नहिगोचरा कथमपिप्राप्तां नु तामाश्रये ॥४॥ त्वत्पादाम्बुजसेवयासुकृतिनो गच्छंति सायुज्यतां तस्य स्त्री परमेश्वरित्रिनयन ब्रह्मादिसाम्यात्मनः। संसारांबुधिमज्जनैपटुतनून् देवेन्द्रमुख्यान्सुरान्मातस्त्वत्पदसेवनेहि विमुखो योमंदधीःसेवते ॥५॥ मातस्त्वत्पदपंकजद्वयरजो मुद्रांककोटीरिणस्ते देवा जयसङ्गरे विजयिनो निः शंकमंके गताः। देवोऽहं भुवने न मे समइति स्पर्धी वहन्तःपरे तत्तुल्यं नियतं य

थाऽसुभिरमा नाशं व्रजन्ति स्वयं ॥
॥६॥ त्वन्नामस्मरणात् पलायनप
रा द्रष्टुं च शक्ता न ते भूतप्रेतपिशा
चराक्षसगणा यक्षाश्च नागाधिपाः।
दैत्या दानवपुंगवाश्चखचराव्याघ्रा
दिका जन्तवो डाकिन्यः कुपिता
न्तकाश्च मनुजं मातः क्षणं भूतले
॥७॥ लक्ष्मीःसिद्धगणाश्च पादुक
मुखाः सिद्धास्तथा वारिणः स्तम्भ
श्चापि रणांगणे गजघटास्तम्भस्त
था मोहनं। मातस्त्वत्पदसेवया ख
लु नृणां सिध्यन्ति तेतेगुणाः कांतिः

कान्तमनोभवस्य भवति क्षुद्रोऽपि
वाचस्पतिः ॥८॥ ताराष्टकमिदं र
म्यं भक्तिमान् यःपठेन्नरः। प्रातर्म
ध्यान्हकाले च सायान्हे नियतः शु
चिः॥९॥ लभते कवितां दिव्यां स
र्वशास्त्रार्थविद्भवेत् । लक्ष्मीमनश्व
रां प्राप्य भुक्त्वाभोगान् यथेप्सिता
न ॥१०॥ कीर्तिं कान्तिं च नैरुज्यं
सर्वेषां प्रियतां व्रजेत् विख्यातिं चा
पि लोकेषु प्राप्यान्तेमोक्षमाप्नुया
त्॥११॥इतिनीलतन्त्रे ताराष्टकं सं०।

अथ शीतलाष्टक प्रारम्भः।

श्रीगणेशाय नमः । अस्य श्री
शीतलास्तोत्रस्य । महादेवऋषिः
अनुष्टुप्छन्दः । शीतला देवता ।
लक्ष्मीर्बीजम् । भवानीशक्तिः । स
र्वविस्फोटकनिवृत्तये जपे विनियो
गः । स्कन्द उवाच । भगवन्देवदे
वेश शीतलायाःस्तवंशुभं । वक्तुम
र्हस्यशेषेणविस्फोटकभयाऽपहं । ई
श्वरउवाच । नमामि शीतलां देवीं
रासभस्थां दिगम्बरां । मार्जनीक
लशोपेतां शूर्पालंकृतमस्तकाम् ॥
॥१॥ वन्देऽहं शीतलां देवीं सर्वरोग

भयापहाम् । यामासाद्य निवर्तेत
विस्फोटकभयं महत् ॥२॥ शीतले
शीतले चेति यो ब्रूयाद्दाहपीडितः ।
विस्फोटकभयं घोरं क्षिप्रं तस्य प्रण
श्यति ॥ ३ ॥ यस्त्वामुदकमध्येतु
ध्यात्वापूजयतेनरः । विस्फोटकभ
यं घोरं गृहे तस्य न जायते ॥४॥शी
तले ज्वरदग्धस्य पूतिगन्धगतस्य
च । प्रणष्टचक्षुषःपुंसस्त्वामाहुर्जी
वनौषधं ॥५॥ शीतले तनुजान् रो
गान्नृणां हरसि दुस्तरान् । विस्फो
टकविशीर्णानां त्वमेकाऽमृतवर्षि

णी ॥६॥ गलगण्डग्रहारोगा येचा
न्ये दारुणानृणां । त्वदनुध्यानमा
त्रेण शीतले यान्ति संक्षयं ॥ ७ ॥
नमन्त्रो नौषधं किंचित्पापरोगस्य
विद्यते । त्वामेकां शीतले धात्री ना
ऽन्यांपश्यामि देवतां ॥८॥ मृणाल
तन्तुसदृशींनाभिहृन्मध्यसंस्थिता
म् । यस्त्वां चिन्तयते देवि तस्य
मृत्युर्न जायते ॥९॥ अष्टकं शीत
लादेव्या यः पठेन्मानवःसदा । वि
स्फोटकभयं घोरं गृहे तस्य नजाय
ते ॥१०॥ श्रोतव्यं पठितव्यं च श्र

द्धाभक्तिसमन्वितैः ॥ उपसर्गवि
नाशाय परंस्वस्त्ययनंमहत्॥११॥
शीतले त्वं जगन्माता शीतले त्वं ज
गत्पिता । शीतले त्वं जगद्धात्री शी
तलायै नमोनमः ॥१२॥ शीतलाष्ट
कनामेदं न देयं यस्य कस्यचित् ।
दातव्यं च सदा तस्मै भक्तिश्रद्धाऽ
न्वितोहि यः ॥१३॥ रासभो गर्दभ
श्चैव खरो वैशाखनन्दनः । शीतला
वाहनश्चैव दूर्वाकन्दनिकृन्तनः ।
इतिरासभनामानि ॥१४॥ एतानि
खरनामानि शीतलाग्रे तु यःपठेत् ।

तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥१५॥ इति श्रीस्कन्दपुराणे शीतलाष्टकस्तोत्रं सम्पूर्णं ।

अथ अन्नपूर्णास्तोत्रप्रा० ।

श्रीगणेशाय नमः । नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१॥ नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी मुक्ताहारविलम्ब

मानविलसद्वक्षोजकुम्भान्तरी। का
श्मीरागुरुवासिताङ्गरुचिकरी काशी
पुराधीश्वरी भिक्षां देहि कृपा० ॥२॥
योगानन्दकरी रिपुक्षयकरी धर्मार्थ
निष्ठाकरी चन्द्रार्कानलभासमान
लहरी त्रैलोक्यरक्षाकरी। सर्वैश्वर्य
समस्तवाञ्छितकरी काशीपुराधी
श्वरी भिक्षां देहि कृपा० ॥३॥ कैला
साचलकन्दरालयकरी गौरी उमा
शंकरी कौमारी निगमार्थगोचरक
री ओंकारबीजाक्षरी। मोक्षद्वारक
पाटपाटनकरी काशीपुराधीश्वरी

मानविलसद्वक्षोजकुम्भान्तरी। का
श्मीरागुरुवासिताङ्गरुचिकरी काशी
पुराधीश्वरी भिक्षां देहि कृपा० ॥२॥
योगानन्दकरी रिपुक्षयकरी धर्मार्थ
निष्ठाकरी चन्द्रार्कानलभासमान
लहरी त्रैलोक्यरक्षाकरी। सर्वैश्वर्य
समस्तवाञ्छितकरी काशीपुराधी
श्वरी भिक्षां देहि कृपा० ॥३॥ कैला
साचलकन्दरालयकरी गौरी उमा
शंकरी कौमारी निगमार्थगोचरक
री ओंकारबीजाक्षरी। मोक्षद्वारक
पाटपाटनकरी काशीपुराधीश्वरी

भिक्षां देहि कृपा० ॥४॥ दृश्यादृश्य
प्रभूतवाहनकरी ब्रह्माण्डभाण्डोद
री लीलानाटक सूत्रभेदनकरी वि
ज्ञानदीपांकुरी । श्रीविश्वेशमनः प्र
सादनकरी काशीपुराधीश्वरी भि
क्षां देहि कृपा० ॥५॥ उर्वीसर्वजने
श्वरी भगवती मातान्नपूर्णेश्वरी वे
णीनीलसमानकुन्तलहरी नित्यान्न
दानेश्वरी । सर्वानन्दकरी दशाशु
भकरी काशीपुराधीश्वरी भिक्षां दे
हि कृपा० ॥६॥ आदिक्षान्तसमस्त
वर्णनकरी शम्भोस्त्रिभावाकरी का

श्मीरात्रिजलेश्वरी त्रिलहरी चितमूअ
कुरा शर्वरी । कामाकांक्षक॰
दयकरी काशीपुराधीश्वरी भि॰
देहि कृपा॰ ॥७॥ देवी सर्वविचित्र
रत्नरचिता दाक्षायणी सुन्दरी वा
मस्वादुपयोधरप्रियकरी सौभाग्य
माहेश्वरी । भक्ताभीष्टकरी दशा
शुभकरी काशीपुराधीश्वरी भिक्षां
देहि कृपा॰ ॥८॥ चन्द्रार्कानलको
टिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलधरी च
न्द्रार्कवर्णेश्वरी । मालापुस्तकपाश

भिक्षां देहि। काशीपुराधीश्वरी भि
प्रभूतवृ कृपा० ॥९॥ क्षत्रत्राणकरी
री लैभयकरी माता कृपा सागरी
साक्षान्मोक्षकरी सदा शिवकरी वि
श्वेश्वरी श्रीधरी। दक्षाक्रन्दकरी नि
रामयकरी काशीपुराधीश्वरी भि
क्षां देहि कृपा० ॥१०॥अन्नपूर्णेसदा
पूर्णे शंकरप्राणवल्लभे । ज्ञानवैरा
ग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति॥
॥११॥ माता च पार्वती देवी पिता दे
वो महेश्वरः। बान्धवाः शिवभक्ता
श्च स्वदेशो भुवनत्रयम् ॥१२॥ इ

ति श्रीमच्छंकराचार्यविरचितमन्नपूर्णास्तोत्रं सम्पूर्णम् ।

अथ राधाकवच प्रारम्भः ।

श्रीगणेशाय नमः । पार्वत्युवाच । कैलासवासिन् भगवन् भक्तानुग्रहकारक । राधिकाकवचं पुण्यं कथयस्व मम प्रभो ॥१॥ यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात् । त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥२॥ शिव उवाच ॥ शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसूचितम् ॥ सर्वरक्षाकरं पुण्यं सर्वहत्याह

रं परम्॥३॥ हरिभक्तिपदं साक्षाद् भुक्तिमुक्तिप्रसाधनम् ॥ त्रैलोक्याकर्षणं देवि हरिसान्निध्यकारकम्॥ ॥४॥ सर्वत्र जयदं देवि सर्वशत्रुभयावहम् । सर्वेषां चैव भूतानां मनोवृत्तिहरं परम् ॥५॥ चतुर्धा मुक्तिजनकं सदानन्दकरं परम् । राजसूयाश्वमेधानां यज्ञानां फलदायकम् ॥६॥ इदं कवचमज्ञात्वा राधामन्त्रं च यो जपेत् । स नाप्नोति फलं तस्य विघ्नास्तस्यपदे पदे ॥७॥ ऋषिरस्य महादेवोऽनुष्टुप्छन्दश्च

यत्र देवि दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा ष्वविद्य·

कीर्तितम् । राधास्य देवता प्रोक्ता रं
बीजं कीलकं स्मृतम् ॥८॥ धर्मार्थ
काममोक्षेषु विनायोगःप्रकीर्तितः।
श्रीराधा मे शिरःपातु ललाटं राधि
का तथा ॥९॥ श्रीमती नेत्रयुगलं
कर्णौगोपेन्द्रनन्दिनी । हरिप्रिया ना
सिकां च भ्रूयुगं शशिशोभना १०॥
ओष्ठं पातु कृपादेवी अधरं गोपिका
तथा । वृषभानुसुता दन्तांश्चिबुकं
गोपनन्दिनी ॥११॥ चन्द्रावली पा
तु खण्डे जिह्वां कृष्णप्रिया तथा । क
ण्ठं पातु हरिप्राणा हृदयं विजया त

था ॥१२॥ बाहू द्वौ चन्द्रवदना उदरं सुबलस्वसा । कोटियोगान्विता पातु पादौ सौभद्रिका तथा ॥१३॥ नखांश्चन्द्रमुखी पातु गुल्फौ गोपालवल्लभा । नखान् विधुमुखी देवी गोपी पादतलं तथा ॥१४॥ शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकान्तवल्लभा । जानुदेशं जया पातु हरिणी पातु सर्वतः ॥१५॥ वाक्यं वाणी सदा पातु धनागारं धनेश्वरी । पूर्वां दिशं कृष्णरता कृष्णप्राणा च पश्चिमाम् ॥१६॥ उत्तरां हरिता पातु दक्षिणां वृषभा

नुजा । चंद्रावली नैशमेव दिवा क्ष्वेडितमेखला ॥१७॥ सौभाग्यदा मध्यदिने सायान्हे कामरूपिणी । रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये ॥१८॥ शुभदा सङ्गवे पातु केतुमाला दिनार्धके । शेषाऽपराह्ण समये शमिता सर्वसन्धिषु ॥१९॥ योगिनी भोगसमये रतौ रतिप्रदा सदा कामेशी कौतुके नित्यं योगे रत्नावली मम ॥२०॥ सर्वदा सर्वकार्येषु राधिका कृष्ण मानसा । इत्येतत्कथितं देवि कवचं परमाद्भुतं॥२१॥

सर्वरक्षाकरं नाम महारक्षाकरं परं।
प्रातर्मध्यान्हसमये सायान्हेप्रपठे
द्यदि॥२२॥सर्वार्थसिद्धिस्तस्य स्या
द्यद्यन्मनसि वर्त्तते । राजद्वारेसभा
यां च संग्रामे शत्रुसंकटे ॥२३॥ प्रा
णार्थनाशसमये यः पठेत्प्रयतो न
रः। तस्य सिद्धिर्भवेद् देवि न भयं
विद्यते क्वचित् ॥२४॥ आराधिता
राधिता च तेन सत्यं न संशयः।
गंगास्नानाद्धरेर्नाम ग्रहणाद्यत्फलं
भवेत् ॥२५॥ तत्फलं तस्य भवति
यःपठेत्प्रयतःशुचि । हरिद्रारोचना

यत्र देवि दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्या

चन्दं मण्डितंहरिचन्दनं ॥२६॥ कृत्वा लिखित्वा भूर्जे च धारयेन्मस्तके भुजे । कण्ठे वा देवदेवेशि सहरिर्नात्र संशयः ॥२७॥ कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः। संहारं नियतं चाहं करोमि कुरुते तथा ॥२८॥ वैष्णवाय विशुद्धाय विरागगुणशालिने । दद्यात्कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥२९॥ इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे राधाकवचं समाप्तम् ।

अथ तुलसीस्तोत्र प्रारम्भः ।

श्रीगणेशाय नमः जगद्धात्रि न
मस्तुभ्यंविष्णोश्च प्रियवल्लभे ॥
यतो ब्रह्मादयोदेवाः सृष्टिस्थित्य
न्तकारिणः ॥ १ ॥ नमस्तुलसि क
ल्याणि नमो विष्णुप्रिये शुभे ॥ न
मो मोक्षप्रदे देवि नमः सम्पत्प्रदा
यिके ॥२॥ तुलसी पातु मां नित्यं
सर्वापद्भ्योऽपि सर्वदा ॥ कीर्तिता
पि स्मृता वापि पवित्रयति मानव
म् ॥३॥ नमामि शिरसा देवीं तुल
सीं विलसत्तनुम् ॥ यां दृष्ट्वा पा
पिनो मर्त्या मुच्यन्ते तत्र किल्बि

यत्र देवे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा ख्यविध·

षात् ॥४॥ तुलस्या रक्षितं सर्वं ज
गदेतच्चराचरम् ॥ या विनिर्हंति
पापानि दृष्ट्वावा पापिभिर्नरैः ॥
॥१५॥ नमस्तुलस्यतितरांयस्यै ब
ध्वा बलिं कलौ ॥ कलयन्ति सुखं
सर्वं स्त्रियो वैश्यास्तथाऽपरे ॥६॥
तुलस्यानापरं किञ्चिद्दैवतं जगतीं
तले । यया पवित्रितोलोको विष्णु
सङ्गेन वैष्णवः ॥७॥ तुलस्याः प
ल्लवं विष्णोःशिरस्यारोपितं कलौ
॥ आरोपयति सर्वाणि श्रेयांसि व
रमस्तके ॥८॥ तुलस्यां सकला दे

वा वसन्ति सततं यतः ॥ अतस्ता मर्चयंल्लोके सर्वान्देवान्समर्चयन् ॥ ९ ॥ नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे ॥ पाहिमांसर्वपापेभ्यः सर्वसम्पत्प्रदायिके ॥ १० ॥ इति स्तोत्रं पुरागीतं पुण्डरीकेण धीमता ॥ विष्णुमर्चता नित्यं शोभनैस्तुलसीदलैः ॥११॥ तुलसी श्रीमहालक्ष्मीर्विद्याविद्यायशस्विनी । धर्म्या धर्म्माननादेवि देवदेवमनःप्रिया ॥ १२ ॥ लक्ष्मीःप्रियसखीदेवी द्यौर्भूमिरचला चला । षोडशैतानि

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य·

नामानि तुलस्याःकीर्तयेन्नरः १३॥ लभेत सुतरां भक्तिमन्ते विष्णुपदं तथा। तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥१४॥ तुलसी श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनःप्रिये ॥१५॥ इति श्रीपुण्डरीककृतं तुलसीस्तोत्रं सम्पूर्णं ।

अथ तुलसीकवच प्रारम्भः ।

श्रीगणेशाय नमः । अस्य तुलसीकवचस्तोत्रमन्त्रस्य । श्रीमहादेवऋषिः । अनुष्टुप्छन्दः । श्रीतुल

सीदेवता मनेप्सितकामनासिद्ध्य
थ जपे विनियोगः । तुलसिश्रीमहा
देवि नमःपङ्कजधारिणि । शिरोमे
तुलसी पातु भालं पातु यशस्विनी
॥१॥ दृशौ मे पद्मनयना श्रीसखीश्र
वणौमम । घ्राणं पातु सुगन्धा मे मु
खं च सुमुखी मम ॥२॥ जिह्वां मे पा
तु सुभद्रा कण्ठं विद्यामयी मम ।
स्कन्धौ कल्हारिणी पातु हृदयं वि
ष्णुवल्लभा ॥ ३ ॥ पुण्यदामे पातु
मध्यं नाभिं सौभाग्यदायिनी । क
टिं कुण्डलिनी पातु ऊरू नारदवंदि

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा ...

ता ॥४॥ जननी जानुनी पातु जंघे सकलवन्दिता । नारायणप्रिया पादौ सर्वाङ्गं सर्वरक्षिणी ॥५॥ संकटे विषमे दुर्गे भयं वादे महाहवे । नित्यं हि सन्ध्ययोः पातु तुलसी सर्वतःसदा ॥६॥ इतीदं परमं गुह्यं तुलस्याःकवचामृतं । मर्त्यानाममृतार्थाय भीतानामभयाय च ॥७॥ मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत् ॥८॥ वशाय वश्यकामानां विद्यायै वेदवादिनां । द्रविणाय दरिद्राणां पापिनां पापशान्तये ९॥

अन्नाय क्षुधितानांच स्वर्गाय स्वर्ग
मिच्छताम् ॥ पशुंपशुकामानांपु
त्रं पुत्रकांक्षिणाम् ॥१०॥ राज्याय
भ्रष्टराज्यानामशान्तानां च शान्त
ये । भक्त्यर्थं विष्णुभक्तानां विष्णौ
सर्वान्तरात्मनि ॥११॥ जाप्यं त्रिव
र्गसिद्ध्यर्थं गृहस्थेन विशेषतः । उ
द्यन्तं चण्डकिरणमुपस्थाय कृता
ञ्जलिः ॥ १२ ॥ तुलसीकाननेतिष्ठ
न्नासीनो वा जपेदिदम् । सर्वान्का
मानवाप्नोति तथैव मम सन्निधिम्
॥१३॥ मम प्रियकरं नित्यं हरिम

क्तिविवर्धनं । या स्यान्मृतप्रजा नारी तस्या अंगं प्रमार्जयेत् ॥१४॥ सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम् । वन्ध्याया मार्जयेदंगं कुशैर्मन्त्रेणसाधकः॥साऽपि संवत्सरादेव गर्भं धत्ते मनोहरं । अश्वत्थेराजवश्यार्थी जपेदग्नेः सुरूपभाक् १६॥ पलाशमूले विद्यार्थी तेजोर्थ्यभिमुखी रवेः। कन्यार्थी चण्डिकागेहे शत्रुहत्यै गृहे मम ॥१७॥श्रीकामोविष्णुगेहे च उद्याने स्त्री वशा भवेत् । किमत्र बहुनोक्तेन शृणु सैन्येश त

त्वतः ॥१८॥ यं यं काममभिध्याये तं तं प्राप्नोत्यसंशयं । ममगेहगत स्त्वं तु तारकस्य वधेच्छया॥१९॥ जपन् स्तोत्रं च कवचं तुलसीगत मानसः । मण्डलात्तारकं हन्ता भ विष्यासि न संशयः ॥२०॥ इति श्री ब्रह्माण्डपुराणे तुलसीमाहात्म्ये तु लसीकवचं नाम द्वितीयोऽध्यायः ॥

अथ सूर्यकवचप्रारम्भः ।

श्रीगणेशाय नमः॥ श्रीसूर्य उ वाच ॥ साम्ब साम्ब महाबाहो शृ णु मे कवचं शुभं ॥ त्रैलोक्यमंग

लंनाम कवचं परमाद्भुतं ॥१॥ यज्ज्ञात्वा मन्त्रवित्सम्यक् फलं प्राप्नोति निश्चितम् ॥ यद्धृत्वा च महादेवो गणानामधिपोऽभवत् ॥ ॥२॥ पठनाद्धारणाद्विष्णुः सर्वेषां पालकः सदा ॥ एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥३॥ कवचस्य ऋषिर्ब्रह्मा छन्दोऽनुष्टुबुदाहृतं ॥ श्रीसूर्यो देवता चात्र सर्वदेवनमस्कृतः ॥४॥ यशआरोग्यमोक्षेषु विनियोगः प्रकीर्तितः ॥ प्रणवो मे शिरः पातु घृणिर्मे पातु भालकं

॥ ५ ॥ सूर्योऽव्यान्नयनद्वन्द्वमादि
त्यः कर्णयुग्मकं ॥ अष्टाक्षरोमहा
मन्त्रः सर्वाभीष्टफलप्रदः॥६॥ ह्रीं
बीजं मे मुखं पातु हृदयं भुवनेश्व
री ॥ चन्द्रबिम्बं विंशदाद्यं पातुमे
गुह्यदेशकं ॥ ७ ॥ अक्षरोऽसौ महा
मन्त्रः सर्वतन्त्रेषुगोपितः ॥ शिवो
वन्हिसमायुक्तो वामाक्षीबिन्दुभूषि
तः ॥८॥ एकाक्षरो महामन्त्रः श्री
सूर्यस्य प्रकीर्त्तितः ॥ गुह्याद्गुह्यत
रोमन्त्रो वाञ्छाचिन्तामणिः स्मृ
तः ॥९॥ शीर्षादिपादपर्यन्तं सदा

पातु मनूत्तमः ॥ इति तेकथितं दि
व्यं त्रिषु लोकेषु दुर्लभम् ॥ १० ॥
श्रीप्रदं कान्तिदं नित्यं धनारोग्य
विवर्धनं ॥ कुष्टादिरोगशमनं महा
व्याधिविनाशनं ॥११॥ त्रिसन्ध्यं
यः पठेन्नित्यमरोगी बलवान् भवे
त् ॥ बहुना किमिहोक्तेन यद्यन्म
नसि वर्त्तते ॥ १२॥ तत्तत्सर्वं भवे
त्तस्य कवचस्य च धारणात् । भूत
प्रेतपिशाचाश्च यक्षगन्धर्वराक्षसाः
॥१३॥ ब्रह्मराक्षसवेताला न द्रष्टुम
पि तं क्षमाः । दूरादेव पलायन्ते त

स्य संकीर्तनादपि ॥१४॥ भूर्जपत्रे
समालिख्य रोचनागुरुकुंकुमैः । र
विवारे च संक्रान्त्यां सप्तम्यां च वि
शेषतः ॥१५॥ धारयेत्साधकश्रेष्ठः
श्रीसूर्यस्य प्रियो भवेत् । त्रिलोहम
ध्यगं कृत्वा धारयेद्दक्षिणे करे १६॥
शिखायामथवा कण्ठे सोपि सूर्यो
न संशयः। इति ते कथितं साम्ब त्रै
लोक्यमंगलाभिधं ॥१७॥ कवचंदु
र्लभं लोके तव स्नेहात्प्रकाशितं । अ
ज्ञात्वा कवचं दिव्यं यो जपेत्सूर्यमु
त्तमं ॥१८॥ सिद्धिर्न जायते तस्य

यत्र देशे दुर्भक्षसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्या-

कल्पकोटिशतैरपि ॥१९॥ इति श्री ब्रह्मयामले त्रैलोक्यमंगलं नाम श्री सूर्यकवचं सम्पूर्ण ।

अथ आदित्यहृदय प्रारंभः ।

श्रीगणेशाय नमः । शतानीक उवाच । कथमादित्यमुद्यन्त मुपतिष्ठेद्द्विजोत्तम । एतन्मे ब्रूहि विप्रेन्द्र प्रपद्ये शरणंतव ॥१॥ सुमन्तुरुवाच । इदमेव पुरापृष्टः शंखचक्रगदाधरः । प्रणम्य शिरसा देव मर्जुनेनमहात्मना ॥२॥ कुरुक्षेत्रे महाराज प्रवृत्ते भारते रणे । कृष्णंनाथं स

मासाद्य प्रार्थयित्वा ब्रवीदिदं ॥
॥२॥ अर्जुन उवाच । ज्ञानं च धर्म
शास्त्राणां गुह्याद्गुह्यतरं तथा । म
या कृष्ण परिज्ञातं वाङ्मयं सचराच
रं ॥४॥ सूर्यस्तुतिमयं न्यासं वक्तु
मर्हसि माधव । भक्त्या पृच्छामि
देवेश कथयस्व प्रसादतः ॥५॥ सू
र्यभक्तिं करिष्यामि कथं सूर्यं प्रपूज
ये । तदहं श्रोतुमिच्छामि त्वत्प्रसा
देन यादव ॥६॥ श्रीभगवानुवाच ।
रुद्रादिदैवतैः सर्वैः पृष्टेन कथितं म
या । वक्ष्येहं सूर्यविन्यासं शृणु पांड

व यत्नतः ॥७॥ अस्माकं यत्त्वया पृष्टमेकचित्तो भवार्जुन । तदहं संप्रवक्ष्यामि आदिमध्यावसानकम् ॥८॥ अर्जुन उवाच । नारायण सुरश्रेष्ठ पृच्छामि त्वां महायशः । कथमादित्यमुद्यन्त मुपतिष्ठेत्सनातनं ॥९॥ श्रीभगवानुवाच । साधु पार्थ महाबाहो बुद्धिमानसि पाण्डव । यन्मां पृच्छस्युपस्थानं तत्पवित्रं विभावसोः ॥१०॥ सर्वमंगलमांगल्यं सर्वपापप्रणाशनं । सर्वरोगप्रशमन मायुर्वर्धनमुत्तमं ॥११॥ अमित्रद

मनं पार्थ संग्रामे जयवर्धनं । वर्धनं
धनपुत्राणामादित्यहृदयं शृणु १२
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र
संशयः । त्रिषु लोकेषु विख्यातं निः
श्रेयसकरं परं ॥१३॥ देवदेवं नम
स्कृत्य प्रातरुत्थाय चार्जुन । विघ्ना
न्यनेकरूपाणि नश्यन्ति स्मरणाद
पि ॥१४॥ तस्मात्सर्वप्रयत्नेन सू
र्यमावाहयेत्सदा । आदित्यहृदयं
नित्यं जाप्यं तच्छृणु पाण्डव॥१५॥
यज्जपन्मुच्यते जन्तुर्दारिद्र्यादा
शु दुस्तरात् । लभते च महासिद्धिं

कुष्ठव्याधिविनाशिनीम् ॥१६॥ अ
स्मिन्मन्त्रे ऋषिश्छन्दो देवता श
क्तिरेव च । सर्वमेव महाबाहो कथ
यामि तवाग्रतः ॥१७॥ मया ते गो
पितं न्यासं सर्वशास्त्रप्रबोधितं । अ
थ ते कथयिष्यामि उत्तमं मन्त्र मे
व च ॥१८॥ ओमस्यादित्यहृदये
स्तोत्रमन्त्रस्य श्रीकृष्ण ऋषिः ॥
श्रीसूर्यात्मा त्रिभुवनेश्वरो देवता ।
अनुष्टुप्छन्दः । हरितहयरथं दिवाक
रं घृणिरितिबीजम् । ओं नमो भग
वते जितवैश्वानर जातवेदस इति श

क्तिः ॥ ॐ नमो भगवते आदित्याय नम इति कीलकं ॥ ओमग्निगर्भंदेवता इति मन्त्रः ॥ ओं नमो भगवते तुभ्यमादित्याय ननो नमः श्रीसूर्यनारायणप्रीत्यर्थे जपे विनियोगः । अथन्यासः । ओं ह्रां अंगुष्ठाभ्यांनमः । ओंह्रीं तर्जनीभ्यां नमः । ओंह्रूंमध्यमाभ्यां नमः । ओं ह्रैं अनामिकाभ्यांनमः । ओं ह्रौं कनिष्ठिकाभ्यां नमः । ओं ह्रः करतलकरपृष्ठाभ्यां नमः । ओं ह्रां हृदयाय नमः । ओं ह्रीं शिरसे स्वाहा ।

ओं ह्रूं शिखायै वषट् । ओं ह्रैं कव
चायहुम् । ओं ह्रौं नेत्रत्रयायवौषट् ।
ओं ह्रः अस्त्राय फट् । ओं ह्रांह्रींह्रूंह्रैं
ह्रौंह्रः इति दिग्बन्धः । अथ ध्यानं ।
भास्वद्रत्नाढ्यमौलिः स्फुरदधररु
चा रञ्जितश्चारुकेशो भास्वान् यो
दिव्यतेजाः करकमलयुतः स्वर्णव
र्णःप्रभाभिः । विश्वाकाशावकाश
ग्रहपतिशिखरे भातियश्चोदयाद्रौ
सर्वानन्दप्रदाता हरिहरनमितः पा
तु मां विश्वचक्षुः ॥१॥ पूर्वमष्टदलं
पद्मं प्रणवादिप्रतिष्ठितं । मायाबी

जं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥
॥२॥ आदित्यं भास्करं भानुं रविं
सूर्यं दिवाकरं । मार्तण्डं तपनं चेति
दलेष्वष्टसु योजयेत् ॥३॥ दीप्ता सू
क्ष्मा जया भद्रा विभूतिर्विमला त
था । अमोघा विद्युता चेति मध्ये
श्रीःसर्वतोमुखी ॥४॥ सर्वज्ञःसर्वग
श्चैव सर्वकारणदेवता । सर्वेशं सर्व
हृदयं नमामि सर्वसाक्षिणं ॥५॥ स
र्वात्मासर्वकर्त्ता च सृष्टिजीवनपाल
कः । हितःस्वर्गापवर्गश्च भास्करे
शनमोस्तुते ॥६॥ नमो नमस्तेऽस्तु

सदा विभावसो सर्वात्मने सप्तह
याय भानवे । अनन्तशक्तिर्मणिभू
षणेन ददस्व भुक्तिं मम मुक्तिमव्य
याम् ॥७॥ इति प्रार्थना ॥ अर्कं तु
मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत्
विन्यसे न्नेत्रयोः सूर्यं कर्णयोश्च दि
वाकरं ॥८॥ नासिकायां न्यसेद्भा
नुं मुखे वै भास्करं न्यसेत् । पर्जन्य
मोष्ठयोश्चैव तीक्ष्णं जिह्वान्त न्यसे
त् ॥९॥ सुवर्णरेतसं कण्ठे स्कन्धे
योस्तिग्मतेजसं । बाह्वोस्तु पूषणं चै
व मित्रं वै पृष्ठतो न्यसेत् ॥ १० ॥ व

रुणं दक्षिणे हस्ते त्वष्टारं वामतः क
रे । हस्तावुष्णकरःपातु हृदयं पातु
भानुमान् ॥११॥ उदरे तु यमं विद्या
दादित्यं नाभिमण्डले । कट्यां तु
विन्यसेद्धंसं रुद्रमूर्वोस्तुविन्यसेत्
॥१२॥ जान्वोस्तु गोपतिं न्यस्य स
वितारं तु जंघयोः । पादयोश्च विव
स्वंतं गुल्फयोश्च दिवाकरम् १३॥
बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे
न्यसेत् । सर्वाङ्गेषु सहस्रांशुं दिग्वि
दिक्षु भगं न्यसेत् ॥ १४ ॥ इति
दिग्बन्धः । एष आदित्य विन्यासो

यत्र देवि दुर्जनसंमति गुरोः परिवादः संभूतदोषानुकथनं निन्दा यविद्य-

देवानामपि दुर्लभः । इमं भक्त्या न्यसेत्पार्थ स याति परमां गतिम् ॥१५॥ कामक्रोधकृतात्पापान्मुच्यते नात्रसंशयः ॥ सर्पादपि भयं नैव संग्रामेषु पथिष्वपि ॥ १६ ॥ रिपुसंघट्टकालेषु तथाचोरसमागमे । त्रिसन्ध्यं जपतोन्यासं महापातकनाशनं ॥१७॥ विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवं । शिरोरोगनेत्ररोगः सर्वव्याधिविनाशनं ॥ १८ ॥ कुष्ठव्याधिस्तथा दद्रुरोगाश्चविविधाश्च ये ॥ जपमानस्य नश्यन्ति

रुणं दक्षिणे हस्ते त्वष्टारं वामतः करे । हस्तावुष्णकरः पातु हृदयं पातु भानुमान् ॥११॥ उदरे तु यमं विद्यादादित्यं नाभिमण्डले । कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥१२॥ जान्वोस्तु गोपतिं न्यस्य सवितारं तु जंघयोः । पादयोश्च विवस्वंतं गुल्फयोश्च दिवाकरम् १३॥ बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे न्यसेत् । सर्वाङ्गेषु सहस्रांशुं दिग्विदिक्षु भगं न्यसेत् ॥ १४ ॥ इति दिग्बन्धः । एष आदित्य विन्यासो

देवानामपि दुर्लभः । इमं भक्त्या न्यसेत्पार्थ स याति परमां गतिम् ॥१५॥ कामक्रोधकृतात्पापान्मुच्यते नात्रसंशयः ॥ सर्पादपि भयं नैव संग्रामेषु पार्थिष्वपि ॥ १६ ॥ रिपुसंघट्टकालेषु तथाचोरसमागमे । त्रिसन्ध्यं जपतोन्यासं महापातकनाशनं ॥१७॥ विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवं । शिरोरोगनेत्ररोगः सर्वव्याधिविनाशनं ॥ १८ ॥ कुष्ठव्याधिस्तथा दद्रुरोगाश्चविविधाश्च ये ॥ जपमानस्य नश्यन्ति

शृणु भक्त्या तदर्जुन ॥१९॥ आ
दित्यो मन्त्रसंयुक्त आदित्यो भुव
नेश्वरः । आदित्यान्नापरो देवो
ह्यादित्यः परमेश्वरः ॥२०॥ आ
दित्यमर्चयेद्ब्रह्मा शिव आदित्यम
र्चयत् । यदादित्यमयं तेजो ममते
जस्तदर्जुन ॥२१॥ आदित्यं मन्त्र
संयुक्तमादित्यं भुवनेश्वरं । आदि
त्यं ये प्रपश्यन्ति मां पश्यन्ति न
संशयः ॥२२॥ त्रिसंध्यमर्चयेत्सू
र्यं स्मरेद्भक्त्या तु यो नरः । न स
पश्यति दारिद्र्यं जन्मजन्मनि चा

र्जुन ॥२३॥ एतत्तेकथितं पार्थ आ
दित्यहृदयं मया । शृण्वन्मुक्तश्च
पापेभ्यः सूर्यलोके महीयते ॥२४॥
नमो भगवते तुभ्यमादित्याय नमो
नमः । आदित्यःसविता सूर्यःखगः
पूषागभस्तिमान्॥२५॥सुवर्णःस्फ
टिकोभानुः स्फुरितो विश्वतापनः ।
रविर्विश्वोमहातेजाः सुवर्णःसुप्रबो
धकः ॥२६॥ हिरण्यगर्भस्त्रिशिरा
स्तपनोभास्करोरविः । मार्तण्डो गो
पतिः श्रीमान्कृतज्ञश्च प्रतापवान्
॥२७॥ तमिस्रहा भगो हंसो नास

त्यस्य तमोनुदः । शुद्धो विरोचनः
केशी सहस्रांशुर्महाप्रभुः ॥ २८ ॥
विवस्वान्पूषणोमृत्यु र्मिहिरो जाम
दग्न्यजित् । धर्मरश्मिःपतंगश्च श
रण्योऽमित्रहा तपः ॥२९॥ दुर्विज्ञे
यगतिः शूरस्तेजोराशिर्महायशाः ।
शम्भुश्चित्रांगदःसौम्यो हव्यकव्य
प्रदायकः ॥३०॥ अंशुमानुत्तमोदेव
ऋग्यजुःसाम एव च । हरिदश्वस्त
मोदारः सप्तसप्तिर्मरीचिमान् ॥
॥३१॥ अग्निगर्भो दितेः पुत्रः शंभु
स्तिमिरनाशनः । पूषा विश्वम्भरो

यत्र देशे दुर्जनसंमाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा ऽविद्य-

मित्रः सुवर्णः सुप्रतापवान् ॥३२॥ आ
तपी मण्डली भास्वांस्तपनः सर्वता
पनः । कृतविश्वो महातेजाः सर्वर
त्नमयोद्भवः ॥३३॥ अक्षरश्च क्ष
रश्चैव प्रभाकरविभाकरौ । चन्द्र
श्चन्द्रांगदः सौम्यो हव्यकव्यप्रदा
यकः ॥३४॥ अंगारको गदोऽगस्ती
रक्तांगश्चांगवर्धनः । बुधो बुद्धास
नो बुद्धिर्बुद्धचात्मा बुद्धिवर्धनः ३५॥
बृहद्भानुर्बृहद्भासो बृहद्धामा बृह
स्पतिः । शुक्रस्त्वं शुक्लरेतास्त्वं
शुक्लांगः शुक्लभूषणः ॥३६॥ शनि

मान् शनिरूपस्त्वं शनैर्गच्छसि स
र्वदा। अनादिरादिरादित्यस्तेजोरा
शिर्महातपाः ॥३७॥ अनादिरादि
रूपस्त्वमादित्यो दिक्पतिर्यमः ॥
भानुमान भानुरूपस्त्वं स्वर्भानुर्भा
नुर्दीप्तिमान् ॥३८॥ धूमकेतुर्महा
केतुः सर्वकेतुरनुत्तमः। तिमिरावर
णः शम्भुः स्रष्टा मार्तण्ड एव च ॥
॥३९॥ नमः पूर्वाय गिरये दक्षिणाय
नमो नमः। नमोत्तराय गिरये दक्षि
णाय नमो नमः ॥४०॥ नमो नमः
सहस्रांशो ह्यादित्याय नमोनमः।

नमःपद्मप्रबोधाय नमस्ते द्वादशा
त्मने ॥४१॥ नमो विश्वप्रबोधाय
नमोभ्राजिष्णुजिष्णवे। ज्योतिषेच
नमस्तुभ्यं ज्ञानार्काय नमो नमः॥
॥४२॥प्रदीप्ताय प्रगल्भाय युगांता
य नमोनमः। नमस्ते होतृपतये पृ
थिवीपतये नमः ॥४३॥ नमोंकारव
षट्कार सर्वयज्ञ नमोस्तुते । ऋग्वे
दाय यजुर्वेद सामवेद नमोस्तुते॥
॥४४॥ नमो हाटकवर्णाय भास्करा
य नमो नमः । जयाय जयभद्राय ह
रिदश्वाय ते नमः ॥४५॥ दिव्याय

दिव्यरूपाय ग्रहाणां पतये नमः ।
नमस्ते शुचये नित्यं नमः कुरुकुला
त्मने ॥४६॥ नमस्त्रैलोक्यनाथाय
भूतानां पतये नमः । नमः कैवल्य
नाथाय नमस्ते दिव्यचक्षुषे ॥४७॥
त्वंज्योति स्त्वंद्युतिर्ब्रह्मा त्वं वि
ष्णुस्त्वं प्रजापतिः । त्वमेव रुद्रो
रुद्रात्मा वायुरग्नि स्त्वमेव च ॥
॥४८॥ योजनानां सहस्रे द्वे द्वेशते
द्वे च योजने ॥ एकेन निमिषार्धेन
क्रममाण नमोस्तुते ॥४९॥ नवयो
जनलक्षाणि सहस्र द्विसतानि च ॥

यावद्घटीप्रमाणेन कममाणनमो
स्तुते ॥५०॥ अग्रतश्च नमस्तुभ्यं
पृष्ठतश्च सदानमः ॥ पार्श्वतश्चन
मस्तुभ्यंनमस्तेचास्तुसर्वदा॥नमः
सुरारिहंत्रेच सोमसूर्याग्निचक्षुषे ॥
नमो दिव्याय व्योमाय सर्वतन्त्र
मयाय च ॥ ५२ ॥ नमो वेदान्तवे
द्याय सर्वकर्मादिसाक्षिणे ॥ नमो
हरितवर्णाय सुवर्णाय नमोनमः ॥
॥५३॥ अरुणो माघमासे तु सूर्यो
वैफाल्गुने तथा ॥ चैत्रमासे तु वे
दाङ्गो भानुर्वैशाखतापनः ॥ ५४ ॥

ज्येष्ठमासे तपेदिन्द्र आषाढेतपते रविः ॥ गभस्तिःश्रावणेमासे यमो भाद्रपदे तथा ॥५५॥ इषे सुवर्णरेताश्च कार्तिके च दिवाकरः ॥ मार्गशीर्षे तपेन्मित्रः पौषे विष्णुःसनातनः ॥ ५६ ॥ पुरुषस्त्वाधिके मासे मासाधिक्येतु कल्पयेत् ॥ इत्येते द्वादशादित्याः कश्यपेयाःप्रकीर्तिताः ॥५७॥ उग्ररूपा महात्मानस्तपन्ते विश्वरूपिणः। धर्मार्थकाममोक्षाणांप्रस्फुटा हेतवो नृप ५८ सर्वपापहरं चैवमादित्यं संप्रपूजये

यत्र देवो दुर्जनसंपाते गुरोः परिवादः

त् । एकधा दशधाच्चैव शतधा च
सहस्रधा ॥५९॥ तपन्ते विश्वरूपे
ण सृजन्ति संहरन्ति च । एष वि
ष्णुः शिवश्चैव ब्रह्मा चैव प्रजाप
तिः ॥६०॥ महेन्द्रश्चैव कालश्च
यमो वरुण एव च ॥ नक्षत्रग्रहता
राणामधिपो विश्वतापनः ॥ ६१ ॥
वायुरग्निर्धनाध्यक्षो भूतकर्ता स्व
यंप्रभुः । एष देवो हि देवानां सर्व
माप्यायते जगत् ॥६२॥ एष कर्ता
हि भूतानां संहर्ता रक्षकस्तथा । ए
ष लोकानुलोकाश्च सप्तद्वीपाश्च

सागराः ॥६३॥ एष पातालसप्त
स्था दैत्यदानवराक्षसाः । एष धा
ता विधाता च बीजं क्षेत्रं प्रजाप
तिः ॥६४॥ एष एव प्रजानित्यंसं
वर्धयति रश्मिभिः । एष यज्ञः स्व
धा स्वाहा ह्रीःश्रीश्चपुरुषोत्तमः ॥
॥६५॥ एष भूतात्मकोदेवः सूक्ष्मो
व्यक्तःसनातनः ॥ ईश्वरस्सर्वभूता
नां परमेष्ठीप्रजापतिः ॥६६॥ काला
त्मा सर्वभूतात्मा वेदात्मा विश्वतो
मुखः ॥ जन्ममृत्यु जराव्याधि सं
सारभयनाशनः॥६७॥ दारिद्र्यव्य

सनत्कुमारसी श्रीमान्देवो दिवाकरः। विकर्तनो विवस्वांश्च मार्तण्डो भास्करो रविः ॥६८॥ लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्महेश्वरः। लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥६९॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः। गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः ॥७०॥ आयुरारोग्यमैश्वर्यं नरा नार्यश्च मंदिरे। यस्य प्रसादात्संतुष्टिरादित्यहृदयं जपेत् ॥७१॥ इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः। प्रा

तदुत्थाय कौंतेय तस्य रोगभयं न
हि ॥ ७२ ॥ पातकान्मुच्यते पार्थ
व्याधिभ्यश्च न संशयः । एकसंध्यं
द्विसंध्यं वा सर्वपापैः प्रमुच्यते ७३॥
त्रिसंध्यं जपमानस्तु पश्येच्च परमं
पदम् । यदह्नात्कुरुते पापं तदह्ना
त्प्रतिमुच्यते ॥७४॥ यद्रात्र्यात्कु
रुतेपापं तद्रात्र्यात्प्रतिमुच्यते । द
द्रुस्फोटककुष्ठानि मंडलानि विषू
चिका ॥७५॥ सर्वव्याधिमहारोग
भूतबाधास्तथैव च । डाकिनी शा
किनी चैव महारोगभयं कुतः ७६॥

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा आबद्य

ये चान्ये दुष्टरोगाश्च ज्वरातीसार
कादयः। जपमानस्य नश्यन्ति जी
वेच्च शरदां शतं ॥७७॥ संवत्सरे
ण मरणं यदा तस्य ध्रुवं भवेत्। अ
शीर्षां पश्यति च्छायामहोरात्रं धनं
जय ॥७८॥यस्त्विदं पठते भक्त्या
भानोर्वारे महात्मनः। प्रातःस्नाने
कृते पार्थ एकाग्रकृतमानसः ७९॥
सुवर्णचक्षुर्भवति न चांधस्तु प्रजाय
ते। पुत्रवान्धनसंपन्नो जायते चारु
जःसुखी ॥८०॥ सर्वसिद्धिमवाप्नो
ति सर्वत्र विजयी भवेत्। आदित्य

हृदयं पुण्यं सूर्यनामविभूषितं॥८१॥
श्रुत्वा च निखिलं पार्थ सर्वपापैःप्रमु
च्यते । अतःपरतरं नास्ति सिद्धि
कामस्य पांडव ॥ ८२ ॥ एतज्जप
स्य कौंतेय येन श्रेयोह्यवाप्स्यसि ।
आदित्यहृदयं नित्यं यः पठेत्सुस
माहितः ॥८३॥ भ्रूणहा मुच्यते पा
पात्कृतघ्नो ब्रह्मघातकः । गोघ्नः
सुरापो दुर्भोजी दुष्प्रतिग्रहकारकः
॥८४॥पातकानि च सर्वाणि दहत्ये
व न संशयः । य इदं शृणुयान्नित्यं
जपेद्वाऽपि समाहितः ॥ ८५ ॥ सर्व

पापविशुद्धात्मा सूर्यलोकेमहीयते
अपुत्रो लभते पुत्रान्निर्धनोधनमाप्नु
यात् ॥८६॥ कुरोगी मुच्यते रोगाद्भ
क्त्या यःपठेत् सदा। यस्त्वादित्य
दिनेपार्थ नाभिमात्रजले स्थितः ॥
॥८७॥ उदयाचलमारूढं भास्करं
प्रणतःस्थितः। जपते मानवो भ
क्त्या शृणुयाद्वापि भक्तितः ॥८८॥
स याति परमं स्थानं यत्र देवो दिवा
करः। अमित्रदमनं पार्थ यदाकर्तु
समारभेत् ॥८९॥तदा प्रतिकृतिं कृ
त्वा शत्रोश्चरणपांसुभिः। आक्र

म्य वामपादेन ह्यादित्यहृदयं ज
पेत् ॥९०॥ एतन्मन्त्रं समाहूय सर्व
सिद्धिकरंपरं। ॐ ह्रींमालीढंस्वाहा
ॐ ह्रींनिलीढंस्वाहा ॥ ॐ मालीढं
स्वाहा । इतिमन्त्रः । त्रिभिश्च रो
गी भवति ज्वरी भवति पञ्चभिः । ज
पैस्तु सप्तभिः पार्थ राक्षसीं तनुमा
विशेत् ॥९१॥ राक्षसेनाभिभूतस्य
विकारान् शृणु पाण्डव । गीयते नृ
त्यते नग्न आस्फोटयति धावति ॥
॥९२॥ शिवारुतं च कुरुते हसते क्र
न्दते पुनः । एवं सम्पीड्यते पार्थ

यद्यपि स्यान्महेश्वरः ॥ १३ ॥ किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः । पीडितस्य न सन्देहो ज्वरो भवति दारुणः ॥१४॥ यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभंकरं । तदा सलिलमादाय जपेन्मन्त्रमिमं बुधः ॥१५॥ नमो भगवते तुभ्यमादित्याय नमो नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ॥ १६ ॥ स्नापयेत्तेन मन्त्रेण शुभं भवति नान्यथा । अन्यथा च भवेद्दोषो नश्यते नात्र संशयः ॥१७॥ अतस्ते नि

खिलः प्रोक्तः पूजां चैव निबोध मे।
उपलिप्त शुचौ देशे नियतो वाग्य
तःशुचिः ॥ ९८ ॥ वृत्तं वा चतुरस्रं
वा लिप्तभूमौलिखेच्छुचिः। त्रिधा
तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम्
॥९९॥ अष्टपत्रं लिखेत्पद्मं लिप्त
गोमयमण्डले ॥ पूर्वपत्रे लिखेत्सू
र्यमाग्नेय्यां तु रविं न्यसेत् १००॥
याम्यायां च विवस्वन्तं नैर्ऋत्यां
तु भगं न्यसेत् ॥ प्रतीच्यां वरुणं
विन्द्याद्वायव्यां मित्रमेव च ॥१॥
आदित्यमुत्तरे पत्रे ईशान्यां मित्र

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा आवद्य

मेवच ॥ मध्येतु भास्करंविन्द्यात्क
मैणैवं समर्चयेत् ॥२॥ अतः परत
रं नास्ति सिद्धिकामस्य पाण्डव।
महातेजःसमुद्यन्तं प्रणमेत्स कृता
ञ्जलिः ॥३॥ सकेसराणि पद्मानि
करवीराणि चार्जुन । तिलतण्डुल
युक्तानि कुशगन्धोदकानिच ॥४॥
रक्तचन्दनमिश्राणि कृत्वावै ताम्र
भाजने । धृत्वा शिरसि तत्पात्रं जा
नुभ्यां धरणीं स्पृशेत् ॥५॥ मन्त्रपू
तं गुडाकेशश्चार्घ्यं दद्याद्रभस्तये।
सायुधं सरथं चैव सूर्यमावाहयाम्य

हं ॥६॥ स्वागतो भव । सुप्रतिष्ठितो भव । सन्निधो भव । सन्निहितो भव । सुमुखो भव । इतिपञ्चमुद्राः । स्फुटयित्वाऽर्हयेत्सूर्यं भुक्तिं मुक्तिं लभेन्नरः ॥७॥ ॐ श्रीं विद्याकिलिकिलिकटकेष्टसर्वार्थसाधनाय स्वाहा । ॐश्रीं ह्रीं ह्रूं हंसःसूर्यायनमः स्वाहा । ओंश्रींह्रांह्रींह्रूंह्रः सूर्यमूर्तयेस्वाहा ओंश्रींह्रींखंखःलोकाय सर्वमूर्तये स्वाहा । ओंह्रूंमार्तण्डाय स्वाहा । नमोस्तुसूर्याय सहस्रभानवे नमोस्तु वैश्वानरजातवेदसे।

त्वमेव चार्घ्यं प्रतिगृह्ण देव देवाधिदे
वाय नमो नमस्ते ॥८॥ नमो भग
वते तुभ्यं नमस्ते जातवेदसे । दत्त
मर्घ्यं मया भानो त्वं गृहाण नमोस्तु
ते ॥९॥ एहि सूर्य सहस्रांशो तेजो
राशे जगत्पते । अनुकम्पय मां देव
गृहाणार्घ्यंनमोस्तुते ॥१०॥नमो भ
गवते तुभ्यं नमस्ते जातवेदसे । म
मेदमर्घ्यं गृह्ण त्वं देवदेव नमोस्तुते
॥११॥ सर्वदेवाधिदेवायआधिव्या
धिविनाशिने । इदं गृहाण मे देव स
र्वव्याधिर्विनश्यतु ॥१२॥ नमः सु

र्याय शान्ताय सर्वरोगविनाशिने।
ममेप्सितं फलं दत्वा प्रसीद परमे
श्वर ॥१३॥ ओं नमो भगवते सूर्या
य स्वाहा। ओंशिवाय स्वाहा। ओं
सर्वात्मने सूर्यायनमःस्वाहा। ओं
अक्षय्यतेजसे नमः स्वाहा। सर्वसं
टकदारिद्र्यं शत्रुं नाशयनाशय।
सर्वलोकेषु विश्वात्मन्सर्वात्मन्सर्व
दर्शक ॥१४॥ नमो भगवते सूर्य कु
ष्ठ रोगान्विखण्डय। आयुरारोग्य
मैश्वर्यं देहि देव नमोस्तुते ॥१५॥
नमो भगवते तुभ्यमादित्याय नमो

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा आवद

नमः । ओमक्षय्यतेजसे नमः । ओं सूर्याय नमः । आदित्यंच शिवं विद्याच्छिवमादित्यरूपिणं । उभयोरन्तरं नास्ति आदित्यस्य शिवस्य च ॥१६॥ एतदिच्छाम्यहं श्रोतुंपुरुषो वैदिवाकरः । उदये ब्रह्मणोरूपं मध्यान्हेतु महेश्वरः ॥ १७॥ अस्तमाने स्वयं विष्णुस्त्रिमूर्तिश्च दिवाकरः । नमो भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥ १८॥ ममेदमर्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते । श्रीसूर्याय सांगाय सपरि

वाराय श्रीसूर्यनारायणायेदमर्घ्यं ॥१९॥ हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः। कृतघ्नघ्नाय सत्याय तस्मै सूर्यात्मने नमः॥२०॥ जयोऽजयश्च विजयो जितप्राणो जितश्रमः। मनोजवो जितक्रोधो वाजिनः सप्त कीर्तिताः ॥२१॥ हरितहयरथं दिवाकरं कनकमयाम्बुजरेणुपिञ्जरं। प्रतिदिनमुदये नवं नवं शरणमुपैमि हिरण्यरेतसं ॥ २२ ॥ न तं व्यालाः प्रबाधन्ते न व्याधिभ्यो भयं भवेत्। न नागेभ्यो भयं चैव न

च भूतभयं क्वचित् ॥२३॥ अग्नि
शत्रु भयंनास्ति पार्थिवेभ्यस्तथैव
च ॥ दुर्गतिं तरते घोरां प्रजां च
लभते पशून् ॥२४ सिद्धिकामो ल
भेत्सिद्धिं कन्याकामस्तु कन्यकां
॥ एतत्पठेत्सकौन्तेय भक्तियुक्तेन
चेतसा॥२५॥अश्वमेधसहस्रस्य वा
जपेयशतस्य च । कन्याकोटिसह
स्रस्य दत्तस्य फलमाप्नुयात् २६॥
इदमादित्यहृदयं योऽधीते सततं
नरः । सर्वपापविशुद्धात्मा सूर्यलो
के महीयते ॥२७॥ नास्त्यादित्य

समो देवो नास्त्यादित्यसमा गतिः
प्रत्यक्षो भगवान्विष्णुर्येन विश्वं प्र
तिष्ठितं॥२८॥नवति योजनानां च
सहस्राणि शतानि च । यावद्घटी
प्रमाणे च तावच्चरति भास्करः॥
॥ २२ ॥ गवां शतसहस्रस्य सम्य
ग्दत्तस्य यत्फलम् । तत्फलं लभ
ते विद्वान् शान्तात्मा स्तौति
यो रविम् ॥१३०॥ योऽधीते सूर्य
हृदयंसकलं सफलं भवेत् ॥ अष्टा
नां ब्राह्मणानां च लेखयित्वा समर्प
येत् ॥३१॥ ब्रह्मलोके ऋषीणां च

जायते मानषोऽपि वा ॥ जातिस्म रत्वमाप्नोति शुद्धात्मा नात्र संश यः ॥ ३२ ॥ अजाय लोकत्रयपाव नाय भूतात्मने गोपतये वृषाय ॥ सूर्याय सर्वप्रलयान्तकाय नमो म हाकारुणिकोत्तमाय ॥ ३३ ॥ विव स्वते ज्ञानभृदन्तरात्मने जगत्प्र दीपाय जगद्धितैषिणे ॥ स्वयम्भुवे दीप्तयहस्त्रचक्षुषेसुरोत्तमायामितते जसे नमः ॥ ३४ ॥ सुरैरनेकैः परि सेविताय हिरण्यगर्भाय हिरण्मया य ॥ महात्मने मोक्षपदाय नित्यं

नमोस्तुते वासरकारणाय ॥३५॥ आदित्यश्चार्चितो देव आदित्यःपरमंपदं आदित्यो मातृको भूत्वा आदित्योवाङ्मयं जगत् ॥ ३६ ॥ आदित्यंपश्यते भक्त्या मां पश्यति ध्रुवं नरः ॥ नादित्यं पश्यते भक्त्या न स पश्यति मांनरः॥३७॥ त्रिगुणं च त्रितत्वं च त्रयो देवास्त्रयोऽग्नयः॥ त्रयाणां च त्रिमूर्तिस्त्वं तुरीयस्त्वंनमोस्तुते ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूति स्थिति नाशहेतवे ।त्रयोमयायात्रिगुणात्म

धारिणे विरिंचिनारायणशंकरात्म
ने ३९ यस्योदयेनेह जगत्प्रबुध्यते
प्रवर्तते चाखिलकर्मसिद्धये । ब्रह्मे
न्द्रनारायणरुद्रवन्दितः स नः स
दा यच्छतु मंगलं रविः ॥ ४० ॥
नमोस्तु सूर्याय सहस्र रश्मये
सहस्र शाखा न्वित संभवात्म
ने । सहस्रयोगोद्भवभावभागिने स
हस्रसंख्यायुगधारिणे नमः ॥४१॥
यन्मण्डलं दीप्तिकरंविशालं रत्न
प्रभं तीव्रमनादिरूपं।दारिद्र्यदुःख
क्षयकारणं च पुनातु मां तत्सवितु

वरेण्यं ॥४२॥ यन्मंडलं देवगणैःसु
पूजितं विप्रैः स्तुतं भावनमुक्तिको
विदम् । तं देवदेवं प्रणमामि सूर्यं पु
नातु मां तत्सवितुर्वरेण्यं ॥४३॥ य
न्मण्डलं ज्ञानघनं त्वगम्यं त्रैलोक्य
पूज्यं त्रिगुणात्मरूपं । समस्ततेजो
मयदिव्यरूपं पुनातु मां त० ॥४४॥
यन्मण्डलं गूढमतिप्रबोधं धर्मस्यवु
द्धिं कुरुते जनानाम् । यत्सर्वपाप
क्षयकारणं च पुनातु मां त० ॥४५॥
यन्मण्डलं व्याधिविनाशदुःखं यदृ
ग्यजुःसामसु संप्रगीतं । प्रकाशितं

यत्र देशे दुर्जनसंपाते गुरोः परिवादः समूतदोषगुण

येन च भूर्भुवःस्वः पुनातु मां त० ॥
॥४६॥ यन्मण्डलं वेदविदोवन्दति
गायन्ति यच्चारणसिद्धसंघाः। यद्यो
गिनो योगजुषां च संघाः पुनातु मां
त० ॥४७॥ यन्मण्डलं सर्वजनेषु पु
जितं ज्योतिश्च कुर्यादिह मर्त्यलो
के। यत्कालकालादिमनादिरूपं पु
नातु मां त० ॥४८॥ यन्मण्डलं वि
ष्णुचतुर्मुखाख्यं यदक्षरं पापहरं ज
नानां। यत्कालकल्पक्षयकारणं च
पुनातु मां त० ॥ ४९ ॥ यन्मण्डलं
विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलय

प्रगल्भं । यस्मिञ्जगत्संहरतेऽखि
लं च पुनातु मां त० ॥५०॥ यन्मंड
लं सर्वगतस्य विष्णोरात्मा परंधा
म विशुद्धतत्त्वं । सूक्ष्मान्तरैर्योगप
थानुगम्यं पुनातु मां त० ॥५१॥ य
न्मण्डलं ब्रह्मविदो वदन्ति गायन्ति
यच्चारणसिद्धसंघाः । यन्मण्डलं वे
दविदः स्मरंति पु० ५२ यन्मंडलं वे
दविदोपगीतं यद्योगिनां योगपथानु
गम्यं । तत्सर्ववेदं प्रणमामि सूर्यं
पुनातु मां त० ॥५३॥ मण्डलाष्टमि
दं पुण्यंयःपठेत्सततं नरः । सर्वपा

यत्र देशे दुर्जनसंघाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

पापविशुद्धात्मा सूर्यलोके महीयते ॥
॥५४॥ ध्येयः सदा सवितृमण्डलम
ध्यवर्ती नारायणः सरसिजासनस
न्निविष्टः । केयूरवान्मकरकुण्डलवा
न्किरीटी हारी हिरण्मयवपुर्धृतशंख
चक्रः ॥५५॥ सशंखचक्रं रविमण्ड
लं स्थितं कुशेशयाक्रान्तमनन्तम
च्युतं । भजामि बुद्ध्या तपनीयमू
र्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलं॥
॥५६॥ एवं ब्रह्मादयो देवा ऋषयश्च
तपोधनाः । कीर्तयन्ति सुरश्रेष्ठं देवं
नारायणं विभुम् ॥५७॥ वेदवेदांग

शारीरं दिव्यदीप्तिकरं परं । रक्षो घ्नंरक्तवर्णं च सृष्टिसंहारकारकं ॥ ॥५८॥ एकचक्रोरथो यस्य दिव्यः कनकभूषितः । स मे भवतु सुप्रीतः पद्महस्तोदिवाकरः ॥ ५९ ॥ आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करःप्रोक्तं चतुर्थं तु प्रभाकरः ॥६०॥ पञ्चमं तु सहस्रांशुः षष्ठं चैव त्रिलोचनः । सप्तमं हरिदश्वश्च अष्टमं तु विभावसुः ॥ ॥६१॥ नवमं दिनकृत्प्रोक्तं दशमं द्वादशात्मकः । एकादशं त्रयीमूर्तिर्द्वा

दशं सूर्य एव च ॥६२॥ द्वादशादि
त्यनामानि प्रातःकाले पठेन्नरः ।
दुःस्वप्ननाशनं चैव सर्वदुःखं च न
श्यति ॥६३॥ दद्रुकुष्ठहरं चैव दा
रिद्र्यं हरते ध्रुवम् । सर्वतीर्थप्रदं चै
व सर्वकामप्रवर्धनम् ॥६४॥ यः पठे
त्प्रातरुत्थाय भक्त्या नित्यमिदं
नरः । सौख्यमायुस्तथाऽरोग्यं लभ
ते मोक्षमेव च ॥६५॥ अग्निमीडे
नमस्तुभ्यमिषेत्वोर्जे स्वरूपिणे ।
अग्नआयाहि वीतस्त्वं नमस्तेज्यो
तिषां पते ॥६६॥ शन्नोदेविनमस्तु

भ्यं जगच्चक्षुर्नमोस्तु ते । पञ्चमा योपवेदाय नमस्तुभ्यं नमो नमः॥ ॥ ६७ ॥ पद्मासनः पद्मकरो पद्मगर्भ समद्युतिः । सप्ता श्वरथसंयुक्तः द्विभुजःस्यात्सदा र विः ॥६८॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तर सहस्रेषु दारिद्र्यं नोपजायते ६९॥ उदयगिरिमुपेतं भास्करंपद्महस्तं निखिलभुवननेत्रं रत्नरत्नोपमेयं। तिमिरकारिमृगेंद्रं बोधकं पद्मिनी नां सुरवरमभिवन्दे सुन्दरं विश्वव

न्थं ॥१७॥ इति श्रीभविष्योत्तरपुराणे श्रीकृष्णार्जुनसंवादे आदित्यहृदयस्तोत्रं सम्पूर्णं ।

अथ सूर्याष्टक प्रारंभः ।

श्रीगणेशाय नमः ॥ साम्ब उवाच ॥ आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर ॥ दिवाकर नमस्तुभ्यं प्रभाकर नमोस्तु ते ॥ १ ॥ सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजं ॥ श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहं ॥ २ ॥ लोहितं रथमारूढं सर्वलोकपिताहं ॥ महापा

पहरं देवं तं० ॥३॥ त्रैगुण्यं च म
हाशूरं ब्रह्मविष्णुमहेश्वरं ॥ महा
पापहरं देवं तं० ॥४॥ बृंहितं ते
जपुञ्जं च वायुराकाशमेव च ॥ प्र
भुस्त्वंसर्वलोकानां तं० ॥५॥ बन्धू
कपुष्पसङ्काशंहारकुण्डलभूषितं ॥
एकचक्रधरं देवं तं० ॥६॥ तं सूर्यं
जगत्कर्तारं महातेजःप्रदीपनं ॥ म
हापापहरं देवं तं० ॥७॥ तं सूर्यं
जगतां नाथं ज्ञानविज्ञानमोक्षदं ॥
महापापहरं देवं तं० ॥८॥ सूर्याष्ट
कं पठेन्नित्यं ग्रहपीडाप्रणाशनं ॥

वज्र देहि दुर्जनसंपात गुरो

अपुत्रो लभतेपुत्रं दरिद्रोधनवान् भवेत् ॥९॥ आमिषंमधुपानं च यः करोति रवेर्दिने । सप्तजन्मभवेद्रोगी जन्मजन्मदरिद्रता ॥१०॥ स्त्रीतैलमधुमांसानि यस्त्यजेत्तु रवेर्दिने । नव्याधिः शोकदारिद्र्यं सूर्यलोकं स गच्छति ॥ ११॥ इतिश्री शिवप्रोक्तं सूर्याष्टकंसमाप्तं ॥९६॥

अथ रामगीताप्रारम्भः ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ ततो जगन्मंगलमंगलात्मना विधाय रामायणकीर्तिमु

त्तमाम् । चचार पूर्वाचरितं रघूत्तमो
राजर्षिवर्यैरभिसेवितं यथा ॥ १ ॥
सौमित्रिणा पृष्ट उदारबुद्धिना रा
मःकथाःप्राह पुरातनीःशुभाः । रा
ज्ञःप्रमत्तस्य नृगस्य शापतो द्विज
स्य तिर्यक्त्वमथाह राघवः ॥२॥
कदाचिदेकान्तउपास्थितं प्रभुं रामं
रमालालितपादपंकजं । सौमित्रि
रासादित शुद्धभावनः प्रणम्यभ
क्त्या विनयान्वितोऽब्रवीत् ॥ ३ ॥
सौमित्रिरुवाच । त्वं शुद्धबोधोसि
हिसर्वदेहिनामात्माऽस्यधीशोऽसि

निराकृतिःस्वयं । प्रतीयसे ज्ञानदृ
शां महामते पादाब्जभृंगाहितसंग
संगिनाम् ॥ ४ ॥ अहं प्रपन्नोऽस्मि
पदाम्बुजं प्रभो भवापवर्गं तवयोगि
भावितं । यथाऽञ्जसा ज्ञानमपार
वारिधिं सुखं तरिष्यामि तथानुशा
धिमाम् ॥५॥ श्रुत्वाथ सौमित्रिव
चोऽखिलं तदाप्राह प्रपन्नार्तिहरः प्र
सन्नधीः । विज्ञानमज्ञानतमोपशा
न्तये श्रुतिप्रपन्नं क्षितिपालभूषणः
॥६॥ श्रीराम उवाच ॥ आदौस्ववर
र्णाश्रमवर्णिताःक्रियाः कृत्वा समा

सादितशुद्धमानसः । समाप्य तत्पूर्वमुपात्तसाधनःसमाश्रयेत्सद्गुरुमात्मलब्धये ॥७॥ क्रियाशरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः । धर्मेतरात्तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ॥ ॥८॥ अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते । विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जंसविरोधमीरितं ॥९॥ नाऽज्ञानहानिर्न चरागसंक्षयो भवेतत्तः कर्म सदोषमुद्भवेत् । ततःपुनःसं

मृतिरप्यवारिता तस्माद्बुधो जा
नविचारवान्भवेत् ॥१०॥ ननु कि
यावेदमुखेन चेदिता यथैव विद्या पु
रुषार्थसाधनं । कर्तव्यया प्राणभृ
तःप्रचोदिता विद्या सहायत्वमुपैति
सा पुनः ॥११॥ कर्माकृतौ दोषम
पि श्रुतिर्जगौ तस्मात्सदा कार्यमि
दंमुमुक्षुणा । ननु स्वतन्त्राध्रुवका
र्यकारिणी विद्या न किंचिन्मनसाऽ
प्यपेक्षते॥१२॥ न सत्यकार्योऽपिहि
यद्वदध्वरः प्रकांक्षतेऽन्यानपि कार
कादिकान् । तथैव विद्या विविधःप्र

काशितैर्विशिष्यते कर्मभिरेव मुक्त
ये ॥१३॥ केचिद्वदन्तीति वितर्कवा
दिनस्तदप्यसद्दृष्टविरोधकारणात्।
देहाभिमानादभिवर्धते क्रिया वि
द्या गताहंकृतितः प्रसिध्यति ॥१४॥
विशुद्धविज्ञानविरोचनाञ्चिता विद्या
त्मवृत्तिश्चरमेति भण्यते। उदेति
कर्माखिलकारकादिभिर्निहन्ति वि
द्याऽखिलकारकादिकम् ॥१५॥ त
स्मात्त्यजेत्कार्यमशेषतः सुधी वि
द्याविरोधान्न समुच्चयो भवेत्। आ
त्मानुसन्धानपरायणः सदा निवृत्त

सर्वेन्द्रियवृत्तिगोचरः ॥१६॥ याव
च्छरीरादिषु माययात्मधीस्ताव
द्विधेयो विधिवादकर्मणाम् । नेती
तिवाक्यैरखिलंनिषिध्य तज्ज्ञात्वा
परात्मानमथ त्यजेत्क्रियाः १७॥
यदा परात्मात्मविभेदभेदकं विज्ञा
नमात्मन्यवभाति भास्वरं । तदैव
माया प्रविलीयतेऽञ्जसा सकारका
कारणमात्मसंसृतेः ॥१८॥ श्रुतिप्र
माणाभि विनाशिताच साकथंभवि
ष्यत्यपिकार्यकारिणी । विज्ञानमा
त्रादमल द्वितीयतस्तस्मादविद्या

न पुनर्भविष्यति ॥१९॥ यदि स्म न
ष्टा न पुनः प्रसूयते कर्ताहमस्येति
मतिः कथं भवेत् । तस्मात्स्वतंत्रा
न किमप्यपेक्षते विद्या विमोक्षाय
विभाति केवला ॥२०॥ सा तैत्तिरी
यश्रुतिराह सादरं न्यासं प्रशस्ता
खिलकर्मणां स्फुटं । एतावदित्याह
च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न
कर्म साधनं ॥२१॥ विद्यासमत्वेन
तु दर्शितस्त्वया क्रतुर्न दृष्टान्तउदा
हृतः समः । फलैः पृथक्त्वाद्बहुका
रकैः क्रतुः संसाध्यते ज्ञानमतो विप

यय ॥२२॥ सप्रत्ययवायो ह्यहमित्य
नात्मधीरज्ञप्रसिद्धा नतु तत्त्वदर्शि
नः । तस्माद्बुधैस्त्याज्यमपिक्रि
यात्मभिर्विधानतः कर्म विधिप्रका
शितं ॥२३॥ श्रद्धान्वितस्तत्त्वमसी
ति वाक्यतो गुरोःप्रसादादपि शुद्ध
मानसः । विज्ञाय चैकात्म्यमथा
त्मजीवयोःसुखी भवेन्मेरुरिवाप्रक
म्पनः ॥२४॥ आदौपदार्थावगतिर्हि
कारणं वाक्यार्थविज्ञानविधौविधा
नतः । तत्त्वंपदार्थौपरमात्मजीवका
वसीति चैकात्म्यमथानयोर्भवेत् ॥

॥२५॥ प्रत्यक्परोक्षादि विरोधमात्मनो विहायसंगृह्य तयोश्चिदात्मतां । संशोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥२६॥ एकात्मकत्वाज्जहती न संभवेत्तथाऽजहल्लक्षणता विरोधतः । सोयं पदार्थाविव भागलक्षणा युज्येत तत्त्वंपदयोरदोषतः ॥२७॥ रसादिपञ्चीकृतभूतसम्भवं भोगालयं दुःखसुखादिकर्मणां ॥ शरीरमाद्यन्तवदादि कर्मजं माया मयं स्थूलमुपाधिमात्मनः ॥ २८ ॥ सू

क्ष्मं मनोबुद्धिवशेन्द्रियैर्युतं प्राणैरप
ञ्चीकृतभूतसम्भवं । भोक्तुः सुखा
देरनुसाधनं भवेच्छरीरमन्याद्धि दुरा
त्मनो बुधाः ॥२९॥ अनाद्यनिर्वाच्य
मपीहकारणं मायाप्रधानं तु परं श
रीरकं । उपाधिभेदात्तु यतः पृथक्
स्थितं स्वात्मानमात्मन्यवधारये
त्क्रमात् ॥३०॥ कोशेषु पंचस्वपि
तत्तदाकृतिर्विभाति संगात्स्फटिको
पलो यथा । असंगरूपोऽयमजो यं
तोऽद्वयो विजायतेऽस्मिन्परितो वि
चारिते ॥ ३१ ॥ बुद्धेस्त्रिधा वृत्तिर

पीहदृश्यते स्वप्नादिभेदेन गुणत्रयात्मनः । अन्योऽन्यतोऽस्मिन्व्यभिचारतो मृषा नित्ये परे ब्रह्मणि केवले शिवे ॥३२॥ देहेन्द्रियप्राणमनश्चिदात्मनां संघादजस्रं परिवर्तते धियः । वृत्तिस्तमोमूलतयाऽलक्षणा यावद्भवेत्तावदसौ भवोद्भवः ॥३३॥ नेति प्रमाणेन निराकृताखिलो हृदा समास्वादितचिद्घनामृतः त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथाऽम्भः प्रजहाति तत्फलं ॥ ३४ ॥ कदाचिदात्मा न मृतो न जायते न

क्षीयते नापि विवर्धते नवः। निरस्त
सर्वातिशयः सुखात्मकः स्वयंप्रभः
सर्वगतोऽयमद्वयः ३५ एवंविधे ज्ञान
मयेसुखात्मके कथंभवो दुःखमयः
प्रतीयते ॥ अज्ञानतोऽध्यासवशात्प्र
काशते ज्ञाने विलीयेत विरोधतःक्ष
णात् ॥३६॥ यदन्यदन्यत्र विभा
व्यते भ्रमादध्यासमित्याहुरमुं वि
पश्चितः ॥ असर्पभूते हि विभावनं
यथा रज्ज्वादिके तद्वदपीश्वरे ज
गत् ॥ ३७ ॥ विकल्पमायारहिते
चिदात्मकेऽहङ्कार एष प्रथमः प्रक

लिप्तः ॥ अध्यास एवात्मनि सर्व कारणे निरामये ब्रह्मणि केवले परे ॥३८॥ इच्छादिरागादिसुखादिधर्मिकाः सदा धियः संसृतिहेतवः परे ॥ यस्मात्प्रसुप्तौ तदभावतः परः सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥ अनाद्यविद्योद्भवबुद्धिबिम्बितो जीवः प्रकाशोऽयमितीर्यते चितः ॥ आत्मा धियः साक्षितया पृथक्स्थितो बुद्ध्या परिच्छिन्न परः स एव हि ॥४०॥ चिद्बिम्ब साक्षात्मधियां प्रसंगतस्त्वेकत्र वा

तादनलात्कलोहवत् ॥ अन्योऽन्य
मध्यासवशात्प्रतीयते जडाजडत्वं
च चिदात्मचेतसोः ॥४१॥ गुरोः
सकाशादपि वेदवाक्यतः संजात
विद्यानुभवो निरीक्ष्य तं ॥ स्वात्मा
नमात्मस्थमुपाधि वर्जितं त्यजेद
शेषं जडमात्मगोचरं ॥४२॥ प्रका
शरूपोऽहमजोऽहमद्वयोऽसकृद्वि
भातोऽहमतीवनिर्मलः ॥ विशुद्धवि
ज्ञानघनो निरामयः संपूर्णआनन्द
मयोऽहमाक्रियः ॥४३॥ सदैवमुक्तो
ऽहमचिन्त्यशक्तिमानतीन्द्रिय ज्ञा

नमविक्रियात्मकः । अनन्तपरो
क्ष्यमहर्निशं बुधैर्विभावितोऽहं हृदि
वेदवादिभिः ॥४४॥ एवं सदात्मा
नमखण्डितात्मना विचारमानस्य
विशुद्धभावना । हन्यादविद्या न चि
रेणकारकै रसाधनं यद्वदुपासितं रु
जः ॥४५॥ विविक्त आसीन उपार
तेन्द्रियो विनिर्जितात्मा विमलान्त
राशयः । विभावयेदेकमनन्यसाध
नो विज्ञानदृक्केवल आत्मसंस्थि
तः ॥४६॥ विश्वं यदेतत्परमात्मद
र्शनं विलापयेदात्मनि सर्वकारणे ।

पूर्णश्चिदानन्दमयोऽवतिष्ठते नवेद
बाह्यं नचकिंचिदान्तरं ॥४७॥ पूर्वं
समाधेरखिलंविचिन्तयेदोङ्कारमा
त्रं सचराचरं जगत् । तदेव वाच्यं
प्रणवो हि वाचको विभाव्यते ज्ञान
वशान्न बोधतः ॥४८॥ अकारसंज्ञः
पुरुषो हि विश्वको ह्युकारकस्तैज
स ईर्यते क्रमात् । प्राज्ञो मकारः प
रिपठ्यतेऽखिलैः समाधिपूर्वं नतु त
त्त्वतो भवेत् ॥४९॥ विश्वं त्वकारं
पुरुषं विलापयेदुकारमध्ये बहुधा
व्यवस्थितं । ततोमकारे प्रविलाप्य

तैजसं द्वितीयवर्णं प्रणवस्य चान्ति
मं ॥५०॥ मकारमप्यात्मनि चिद्
घने परे विलापयेत्प्राज्ञमपीह कार
णं । सोऽहं परं ब्रह्म सदा विमुक्तिम
द्विजानदृङ्मुक्त उपाधितोऽमलः ॥
॥५१॥ एवं सदाजातपरात्मभावनः
स्वानन्दतुष्टः परिविस्मृताखिलः ।
आस्ते स नित्यात्मसुखप्रकाशकः
साक्षाद्विमुक्तोऽचलवारि सिन्धुवत्
॥५२॥ एवं सदाऽभ्यस्तसमाधियो
गिनो निवृत्तसर्वेन्द्रियगोचरस्य हि ।
विनिर्जिताशेषरिपोरहं सदा दृश्यो

भवेयं जितषड्गुणात्मनः ॥५३॥ ध्यात्वैवमात्मानमहर्निशंमुनिस्ति ष्ठेत्सदा मुक्तसमस्तबन्धनः । प्रारब्धमश्नन्नभिमानवर्जितो मय्येव साक्षात्प्रविलीयते ततः ॥५४॥ आदौ च मध्यं च तथैव चान्ततो भवं विदित्वा भयशोककारणं । हित्वा समस्तं विधिवादचोदितं भजेत्स्व मात्मानमथाखिलात्मनाम् ॥५५॥ आत्मन्यभेदेन विभावयन्निदं भव त्यभेदेन मयात्मना तदा । यथा जलं वारिनिधौ यथापयः क्षीरेवियद्व्यो

न्यनिले यथानिलः ॥५६॥ इत्थंय
दीक्षित हि लोकसंस्थितो जगन्मृषै
वेतिविभावजन्मुनिः। निराकृतत्त्वा
च्छ्रुति युक्तिमानतो यथेन्दुभेदो दि
शि दिग्भ्रमादयः ॥५७॥ यावन्न प
श्येदखिलं मदात्मकं तावन्मदारा
धनतत्परो भवेत्। श्रद्धालुरत्यूर्जि
तभक्तिलक्षणो यस्तस्य दृश्योहम
हर्निशं हृदि ॥५८॥ रहस्यमेतच्छ्रु
तिसारसंग्रहं मया विनिश्चित्य त
वोदितं प्रिय। यस्त्वेतदालोचयती
ह बुद्धिमान् स मुच्यते पातकराशि

भिःक्षणात् ॥५९॥ आतर्यदीदं परि
दृश्यते जगन्मायैव सर्वं परिहृत्य
चेतसा । मद्भावनाभावितशुद्धमा
नसःसुखी भवानन्दमयो निरामयः
॥६०॥ यःसेवते मामगुणं गुणात्परं
हृदा कदा वा यदि वा गुणात्मकम् ।
सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्
पुनाति लोकत्रितयं यथारविः ६१॥
विज्ञानमेतदखिलं श्रुतिसारमेकं वे
दान्तवेद्यचरणेन मयैव गीतं । यःश्र
द्धया परिपठेद्गुरुभक्तियुक्तो मद्रूप
मेति यदि मद्वचनेषु भक्तिः ॥६२॥

इति श्रीमदध्यात्मरामायणे उमा
महेश्वरसम्वादे उत्तरकाण्डे राम
गीता समाप्ता ।

अथ रामरक्षास्तोत्र प्रारंभः ।

श्रीगणेशाय नमः । अस्य श्रीरा
मरक्षास्तोत्रमन्त्रस्य बुधकौशिक
ऋषिः । श्रीसीतारामचन्द्रो देवता ।
अनुष्टुप्छन्दः । सीताशक्तिः । श्री
मद्धनुमान् कीलकम् । श्रीरामचन्द्र
प्रीत्यर्थे रामरक्षास्तोत्रजपेविनियो
गः । अथ ध्यानं । ध्यायेदाजानुबा
हुं धृतशरधनुषं बद्धपद्मासनस्थं पी

तं वासो वसानं नवकमलदलस्पर्धि नेत्रं प्रसन्नं । वामाङ्कारूढसीतामुख कमलमिलल्लोचनं नीरदाभं नाना लङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रं ॥१॥ इति ध्यानं । चरितं रघुनाथस्य शतकोटिप्रविस्तरं । एकैकमक्षरं पुंसां महापातकनाशनं॥ ॥१॥ ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनं । जानकी लक्ष्मणोपेतं जटामुकुटमण्डितं ॥२॥ सासितूणधनुर्बाण पाणिंनक्तंचरान्तकं । स्वलीलया जगत्त्रातुमाविर्भूतमजं

विभुं ॥३॥ रामरक्षां पठेत्प्राज्ञः पा
पघ्नीं सर्वकामदाम् । शिरो मे राघ
वः पातु भालं दशरथात्मजः ॥४॥
कौसल्येयो दृशौ पातु विश्वामित्र
प्रियःश्रुती । घ्राणं पातु मखत्राता मु
खं सौमित्रिवत्सलः ॥५॥ जिह्वां वि
द्यानिधिःपातु कण्ठं भरतवन्दितः ।
स्कन्धौ दिव्यायुधः पातु भुजौ भग्ने
शकार्मुकः ॥६॥ करौ सीतापतिः
पातु हृदयं जामदग्न्यजित् । मध्यं
पातु खरध्वंसी नाभिं जाम्बवदाश्रयः
॥७॥ सुग्रीवेशःकटिं पातु सक्थिनी

हनुमत्प्रभुः । ऊरू रघूत्तमः पातु र
क्षःकुलविनाशकृत् ॥८॥ जानुनी से
तुकृत्पातु जंघे दशमुखान्तकः । पा
दौ विभीषणश्रीदः पातुरामोऽखिलं
वपुः ॥९॥ एतां रामबलोपेतां रक्षां
यःसुकृती पठेत् । स चिरायुः सुखी
पुत्रीविजयीविनयीभवेत् १० पाता
लभूतलव्योमचारिणश्छद्मचारिण
। नद्रष्टुमपि शक्तास्ते रक्षितंरामना
मभिः ११॥ रामेति रामभद्रेतिराम
चन्द्रेति वा स्मरन् । नरो न लिप्यते
पापैर्भुक्तिमुक्तिं च विन्दति ॥१२॥

जगज्जैत्रैकमन्त्रेण रामनाम्नाऽभि
रक्षितं । यः कण्ठेधारयेत्तस्य कर
स्थाःसर्वसिद्धयः ॥१३॥ वज्रपञ्जर
नामेदं यो रामकवचं स्मरेत् । अ
व्याहताज्ञःसर्वत्र लभते जयमंगलं
॥१४॥ आदिष्टवान्यथा स्वप्ने राम
रक्षामिमां हरः । तथा लिखितवान्
प्रातः प्रबुद्धो बुधकौशिकः ॥ १५ ॥
आरामःकल्पवृक्षाणां विरामः सक
लापदाम् । अभिरामस्त्रिलोकानां
रामःश्रीमान्स नःप्रभुः ॥ १६ ॥ तरु
णौ रूपसंपन्नौ सुकुमारौ महाबलौ ।

पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥१७॥ फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ । पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ ॥१८॥ शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् । रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ ॥१९॥ आत्तसज्जधनुषाविषुस्पृशा वक्षयाशुगनिषंगसंगिनौ । रक्षणाय ममरामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥२०॥ सन्नधःकवची खड्गी चापबाणधरो युवा । गच्छन्मनोरथोऽ

स्माकं रामःपातु सलक्ष्मणः ॥२१॥
रामोदाशरथिःशूरो लक्ष्मणानुचरो
बली । काकुत्स्थःपुरुषःपूर्णः कौश
ल्येयो रघूत्तमः ॥२२॥ वेदान्तवेद्यो
यज्ञेशः पुराणपुरुषोत्तमः । जानकी
वल्लभःश्रीमानप्रमेयपराक्रमः २३॥
इत्येतानि जपेन्नित्यं मद्भक्तः श्रद्ध
यान्वितः । अश्वमेधाधिकं पुण्यं सं
प्राप्नोति न संशयः ॥२४॥ रामं दूर्वा
दलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारि
णो नरः ॥२५॥ रामं लक्ष्मणपूर्वजं

रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकं । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं वन्देलोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥२६॥ रामाय रामभद्राय रामचन्द्रायवेधसे । रघुनाथाय नाथाय सीतायाःपतये नमः ॥ २७ ॥

श्रीरामराम रघुनन्दन राम राम
श्रीराम राम भरताग्रज राम राम ।
श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव राम राम

रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकं । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं वन्देलोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥२६॥ रामाय रामभद्राय रामचन्द्रायवेधसे । रघुनाथाय नाथाय सीतायाःपतये नमः ॥२७॥

श्रीरामराम रघुनन्दन राम राम
श्रीराम राम भरताग्रज राम राम ।
श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव राम राम

॥२८॥ श्रीरामचन्द्रचरणौ मनसा
स्मरामि श्रीरामचन्द्रचरणौ वच
सा गृणामि । श्रीरामचन्द्रचरणौ
शिरसा नमामि श्रीरामचन्द्रचर
णौ शरणं प्रपद्ये ॥३०॥ माता रामो
मत्पिता रामचन्द्रः स्वामी रामो म
त्सखा रामचन्द्रः । सर्वस्वं मे राम
चन्द्रो दयालुर्नान्यं जाने नैव जाने
न जाने ॥३०॥ दक्षिणे लक्ष्मणो य
स्य वामे च जनकात्मजा । पुरतो
मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥
॥३१॥ लोकाभिरामं रणरंगधीरं रा

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथन निन्दा चाविद्य-

जीवनेत्रं रघुवंशनाथं । कारुण्यरू
पं करुणाकरं तं श्रीरामचन्द्रं शरणं
प्रपद्ये ॥३२॥ मनोजवंमारुततुल्य
वेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीराम
दूतं शरणं प्रपद्ये ॥३३॥ कूजन्तं रा
म रामेति मधुरं मधुराक्षरं । आरु
ह्य कविताशाखां वन्दे वाल्मीकिको
किलं ३४॥ आपदामपहर्तारं दातारं
सर्वसम्पदां । लोकाभिरामं श्रीरामं
भूयो भूयो नमाम्यहं ॥३५॥ भर्जनं
भवबीजानामर्जनं सुखसम्पदां । त

र्जनं यमदूतानां रामरामेति गर्जनं ॥३६॥ रामोराजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः। रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदाभवतु मे भो राम मामुद्धर ३७॥ राम रामेति रामेति रमे रामे मनोरमे। सहस्रनामतत्तुल्यं रामनाम वरानने ॥३८॥ इतिबुधकौशिकविरचितं रामरक्षास्तोत्रं सं०।

अथ रामस्तवराजप्रारम्भः।

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

श्रीगणेशाय नमः ॥ अस्य श्री
रामचन्द्रस्तवराजस्तोत्रमन्त्रस्य ।
सनत्कुमार ऋषिः । श्रीरामोदेवता
॥ अनुष्टुप्छन्दः । सीताबीजं । ह
नुमान् शक्तिः । श्रीरामप्रीत्यर्थे ज
पे विनियोगः । सूत उवाच ॥ स
र्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवती
सुतं । धर्मपुत्रः प्रहृष्टात्मा प्रत्युवा
च मुनीश्वरं ॥१॥ युधिष्ठिर उवाच
॥ भगवन्योगिनां श्रेष्ठ सर्वशास्त्र
विशारद । किं तत्त्वं किं परं जाप्यं
किंध्यानं मुक्तिसाधनं ॥२॥ श्रोतु

मिच्छामि तत्सर्वं ब्रूहि मे मुनिस
त्तम । वेदव्यास उवाच ॥ धर्मरा
ज महाभाग शृणुवक्ष्यामि तत्त्वतः
॥३॥ यत्परं यद्गुणातीतं यज्ज्यो
तिरमलं शिवं । तदेव परमं तत्त्वं
कैवल्यपदकारणं ॥४॥ श्रीरामेति
परं जाप्यं तारकं ब्रह्मसंज्ञकं । ब्र
ह्महत्यादिपापघ्नमिति वेदविदो वि
दुः ॥५॥ श्रीराम रामेति जना ये
जपन्ति च सर्वदा । तेषां भुक्तिश्च
मुक्तिश्च भविष्यति नसंशयः ॥६॥
स्तवराजं पुराप्रोक्तं नारदेन च धी

दशः दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

मता । तत्सर्वं सम्प्रवक्ष्यामि हरि ध्यानपुरःसरं ॥ ७ ॥ तापत्रयाग्नि शमनं सर्वाघौघनिकृन्तनं । दारिद्र्यदुःखशमनं सर्वसम्पत्करं शिवं ॥८॥ विज्ञानफलदं दिव्यं मोक्षैक फलसाधनं । नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयं ॥९॥ अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे । स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभं ॥१०॥ तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितं । स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसं ॥ ११ ॥

पितुरंकगतंराम मिन्द्रनीलमणिप्रभं । कोमलांगंविशालाक्षंविद्युद्वर्णाम्बरावृतं ॥१२॥ भानुकोटिप्रतीकाशं किरीटेन विराजितं । रत्नग्रैवेयकेयूरं रत्नकुंडलमण्डितं ॥ १३ ॥ रत्नकंकणमञ्जीरं कटिसूत्रैरलंकृतं श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितं ॥१४॥ दिव्यरत्नसमायुक्तमुद्रिकाभिरलंकृतं । राघवं द्विभुजं बालं राममीषत्स्मिताननं ॥ १५ ॥ तुलसीकुन्दमन्दार पुष्पमाल्यैरलंकृतं । कर्पूरागुरुकस्तूरीदिव्यगंध

नुलेपनं ॥१६॥ योगशास्त्रेष्वभिर
तं योगेशं योगदायकं । सदाभरत
सौमित्रि शत्रुघ्नैरुपशोभितं॥१७॥
विद्याधरसुराधीशसिद्धगन्धर्वकिन्न
रैः । योगीन्द्रैर्नारदाद्यैश्च स्तूयमा
नमहर्निशं ॥१८॥ विश्वामित्रवसि
ष्ठादि मुनिभिःपरिसेवितं । सनका
दिमुनिश्रेष्ठैर्योगिवृन्दैश्चसेवितं १९॥
रामं रघुवरं वीरं धनुर्वेदविशारदं ।
मंगलायतनं देवं रामं राजीवलोच
नं ॥२०॥ सर्वशास्त्रार्थतत्वज्ञमान
न्दकरसुन्दरं । कौसल्यानन्दनं रा

मं धनुर्बाणधरं हरिम् ॥२१॥ एवं सञ्चिंतयन्विष्णुंयज्ज्योतिरमलंवि भुं । प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥२२॥ सर्वलोकहितार्थाय तुष्टाव रघुनन्दनं । कृताञ्जलिपुटोभूत्वा चिन्तयन्नद्भुतं हरिम् ॥ ॥२३॥ यदेकं यत्परं नित्यं यदनंतं चिदात्मकं । यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहं ॥२४॥ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुं । श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि२५॥

यत्र देषे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा व्यविचः

कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् । अणोरणीयां समनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श ॥२६॥ नारद उवाच । नारायणं जगन्नाथमभिरामं जगत्पतिं । कविं पुराणंवागीशं रामं दशरथात्मजं ॥ २७ ॥ रामराजं रघुवरं कौशल्यानन्दवर्धनं । भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् ॥२८॥ सत्यं सत्यप्रियं श्रेष्ठं जानकी वल्लभं विभुं । सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणं ॥२९॥ आदित्यं रवि

मीशानं घृणिं सूर्यमनामयम् । आनन्दरूपिणं सौम्यं राघवं करुणामयं ॥३०॥ जामदग्न्यं तपोमूर्तिं रामं परशुधारिणं । वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनं ॥३१॥ श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहं । हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥३२॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतं । मत्स्यकूर्मवराहादि रूपधारिणमव्ययं ॥ ॥३३॥ वासुदेवं जगद्योनिमनादिनिधनं हरिम् । गोविन्दं गोपतिं विष्णु

यत्र देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा असत्य-

गोपीजनमनोहरं ॥३४॥ गोगोपा
लपरीवारं गोपकन्यासमावृतम् ।
विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जग
न्मयम् ॥३५॥ गोगोपिकासमाकी
र्णं वेणुवादनतत्परं । कामरूपं क
लावन्तं कामिनीकामदं विभुं३६॥
मन्मथं मथुरानाथं माधवं मकरध्व
जं । श्रीधरं श्रीकरं श्रीशं श्रीनिवासं प
रात्परं ॥३७॥ भूतेशं भूपतिं भद्रं
विभूतिं भूतिभूषणं । सर्वदुःखहरं वी
रं दुष्टदानववैरिणं ॥३८॥ श्रीनृसिंहं
महाबाहुं महान्तं दीप्ततेजसं । चि

दानन्दमयं नित्यं प्रणवं ज्योतिरू
पिणं॥३९॥आदित्यमण्डलगतं नि
श्चितार्थस्वरूपिणं । भक्तप्रियं पद्म
नेत्रं भक्तानामीप्सितप्रदं॥४०॥कौ
सल्येयंकलामूर्तिं काकुत्स्थं कम
लाप्रियं । सिंहासनसमासीनंसत्य
व्रतमकल्मषं ॥ ४१ ॥ विश्वामित्र
प्रियं दान्तं स्वदारानियतव्रतं । य
ज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परं ॥
॥४२॥सत्यसन्धं जितक्रोधं शरणा
गतवत्सलं । सर्वक्लेशापहरणंविभी
षणवरप्रदं ॥४३॥ दशग्रीवहरं रौद्रं

केशवं केशिमर्दनम् । वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदं॥४४॥नर वानरदेवैश्च सेवितं हनुमत्प्रियं । शुद्धं सूक्ष्मंपरं शान्तं तारकं ब्रह्मरू पिणं ॥४५॥ सर्वभूतात्मभूतस्थं स र्वाधारं सनातनं । सर्वकारणकर्तारं निदानं प्रकृतेःपरम् ॥४६॥ निराम यं निराभासं निरवद्यं निरंजनं । नि त्यानन्दं निराकारमद्वैतं तमसः प रं ॥४७॥ परात्परतरं तत्त्वं सत्या नन्दं चिदात्मकं । मनसा शिरसा नित्यं प्रणमामिरघूत्तमं ॥४८॥ सू

यमण्डलमध्यस्थं रामं सीतासम
न्वितं । नमामि पुण्डरीकाक्षममे
यं गुरुतत्परं ॥४९॥ नमोस्तु वासु
देवाय ज्योतिषां पतये नमः । नमो
स्तुरामदेवाय जगदानन्दरूपिणे॥
॥५०॥ नमो वेदान्तनिष्ठाय योगि
ने ब्रह्मवादिने । मायामयनिरस्ता
य प्रपन्नजनसेविने ॥५१॥ वन्दाम
हे महेशानं चण्डकोदण्डखण्डनं ।
जानकीहृदयानन्दवर्धनं रघुनन्दनं
॥५२॥ उत्फुल्लामलकोमलोत्पल
दलश्यामाय रामायते कामाय प्र

यत्र देशे दुर्जनसम्पाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

मदामनोहरगुणग्रामाय रामात्मने योगारूढ मुनीन्द्रमानससरोहंसाय संसारविध्वंसायस्फुरदोजसेरघुकुलोत्तंसाय पुंसे नमः ५३ भवोद्भवं वेदविदां वरिष्ठमादित्यचंद्रानलसुप्रभावं। सर्वात्मकंसर्वजगत्स्वरूपं नमामि रामं तमसः परस्तात् ॥ ॥५४॥ निरञ्जनं निष्प्रतिमं निरीहं निरामयंनिष्कलमप्रपञ्चं । नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं सममहं भजामि ॥५५॥ भवाब्धिपोतं भरताग्रजं तं भक्तप्रियं भानु

कुलप्रदीपं । भूतत्रिनाथं भुवनाधि
पतं भजामि रामं भवरोगवैद्यं ५६
सर्वाधिपत्यं समरांगधीरं सत्यंचि
दानन्दमयस्वरूपं । सत्यं शिवं
शान्तिमयं शरण्यं सनातनं रामम
हं भजामि ॥५७॥ कार्यक्रियाका
रणमप्रमेयं कविं पुराणं कमलाय
ताक्षं । कुमारवेद्यं करुणामयं तं क
ल्पद्रुमं राममहं भजामि ॥५८॥ त्रै
लोक्यनाथं सरसीरुहाक्षं दयानिधिं
द्वन्द्वविनाशहेतुं । महाबलं वेदनि
धिं सुरेशं सनातनं राममहं भजा

यत्र दृष्टा दुर्जनतया ते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

मि ॥५९॥ वेदान्तवेद्यं कविमीशि
तारमनादि मध्यान्तम चिन्त्यमा
द्यं। अगोचरं निर्मलमेकरूपंनमा
मि रामंतमसः परस्तात् ॥ ६० ॥
अशेषवेदात्मकमादिसंज्ञमजं हरिं
विष्णुमनन्तमाद्यं । अपारसंवित्सु
खमेकरूपं परात्परं राममहं भजा
मि ॥६१॥ तत्वस्वरूपं पुरुषं पुरा
णं स्वतेजसा पूरितविश्वमेकं । रा
जाधिराजं रविमण्डलस्थं विश्वेश्व
रं राममहंभजामि ॥६२॥लोकाभि
रामं रघुवंशनाथं हरिं चिदानन्दम

यं मुकुन्दं । अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात् ॥६३॥ योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवं । नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात् ॥६४॥ विभूतिदं विश्वसृजं विरामं राजेन्द्रमीशं रघुवंशनाथं । अचिन्त्यमव्यक्तमनंतमूर्तिं ज्योतिर्मयं राममहं भजामि ॥ ॥६५॥ अशेषसंसारविहारहीनमादित्यगं पूर्णसुखाभिरामं । समस्तसाक्षिं तमसः परस्तान्नारायणं वि

यत्र दृष्ट दुर्जनसमाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा क्वचित्-

ष्णुमहं भजामि ॥६६॥ मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुं । परात्परं यत्परमं पवित्रं नमामि रामं महतोमहान्तं ॥६७॥ ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा । आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ॥६८॥ तापसा ऋषयःसिद्धाःसाध्याश्चमरुतस्तथा । विप्रावेदास्तथा यज्ञाः पुराणं धर्मसंहिता ॥६९॥ वर्णाश्रमस्तथा धर्मो वर्णधर्मास्तथैव च । यक्षराक्षसगंधर्वा दिक्पाला दिग्गजादयः ॥७०॥

सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुंग
व । वसवोऽष्टौत्रयःकाला रुद्राएका
दशस्मृताः ॥७१॥ तारका दशदि
क् चैव त्वमेव रघुनन्दन । सप्तद्वी
पाःसमुद्राश्च नगानद्यस्तथा द्रुमाः
॥७२॥ स्थावरा जंगमाश्चैव त्वमे
व रघुनायक । देवातिर्यङ्मनुष्याणां
दानवानां तथैव च ॥७३॥ माता पि
ता तथा भ्राता त्वमेव रघुवल्लभ ।
सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव
हि ॥७४॥ त्वमक्षरं परं ज्योतिस्त्व
मेव पुरुषोत्तम । त्वमेव तारकं ब्रह्म

त्वत्तोऽन्यन्नैव किञ्चन ॥७५॥ शा
न्तं सर्वगतं सूक्ष्मं परं ब्रह्म सनातन
म् । राजीवलोचनं रामं प्रणमामि
जगत्पतिम् ॥७६॥ व्यास उवाच ।
ततःप्रसन्नःश्रीरामः प्रोवाच मुनि
पुंगवं । तुष्टोऽस्मि मुनिशार्दूल वृणी
ष्व वरमुत्तमं॥७७॥ नारद उवाच ।
यदि तुष्टोसिसर्वज्ञ श्रीराम करुणा
निधे । त्वन्मूर्तिदर्शनेनैव कृतार्थोऽ
हं च सर्वदा७८धन्योऽहं कृतकृत्यो
हं पुण्योहं पुरुषोत्तम । अद्यमेसफ
लं जन्मजीवितं सफलंचमे७९ अद्य

मे सफलं ज्ञानमद्य मे सफलं तपः । अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा ॥८०॥ त्वत्पादाम्भोरुहद्वन्द्व सद्भक्तिं देहि राघव । ततः परमसंप्रीतःसरामः प्राहनारदम् ॥ ८१ ॥ श्रीराम उवाच। मुनिवर्यमहाभाग मुने त्विष्टं ददामि ते । यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति ॥ ॥८२॥ नारद उवाच । वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु । इदंप्रियं नाथ वरं प्रयाचे पुनः पुनस्त्वामिदमेव याचे ॥

॥८३॥ व्यास उवाच । इत्येवमीडि
तो रामःप्रादात्तस्मै वरान्तरं । वी
रो रामो महातेजाः सच्चिदानन्दवि
ग्रहः ८४॥ अद्वैतममलं ज्ञानं स्वना
मस्मरणं तथा । अन्तर्दधे जगन्ना
थःपुरतस्तस्य राघवः ॥८५॥ इति
श्रीरघुनाथस्य स्तवराजमनुत्तमं ।
सर्वसौभाग्यसम्पत्ति दायकं मुक्ति
दं शुभं ॥८६॥ कथितं ब्रह्मपुत्रेणवे
दानां सारमुत्तमं । गुह्याद्गुह्यतमं
दिव्यं तव स्नेहात्प्रकीर्तितम् ८७॥
यःपठेच्छृणुयाद्वापि त्रिसन्ध्यंश्रद्ध

यान्वितः। ब्रह्महत्यादिपापानि त
त्समानि बहूनि च ॥८८॥ स्वर्णस्ते
यं सुरापानं गुरुतल्पगतिस्तथा। गो
बधाद्युप पापानि अनृतात्सम्भवा
नि च ॥८९॥ सर्वैः प्रमुच्यते पापैः क
ल्पायुतशतोद्भवैः। मानसं वाचि
कं पापं कर्मणा समुपार्जितं ॥९०॥
श्रीरामस्मरणेनैव तत्क्षणान्नश्य
ति ध्रुवं। इदं सत्यमिदं सत्यं सत्य
मेतदिहोच्यते ९१॥ रामः सत्य परं
ब्रह्म रामात्किञ्चिन्न विद्यते। तस्मा
द्रामस्वरूपं हि सत्यं सत्यमिदं ज

गत् ॥९२॥ श्रीरामचन्द्र रघुपुंगव राजवर्य राजेन्द्र राम रघुनायक राघवेश। राजाधिराज रघुनन्दन रामचन्द्र दासोऽहमद्य भवतः शरणागतोस्मि ॥९३॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्ये पुष्पकमासने मणिमये वीरासने संस्थितं। अग्ने वाचयति प्रभंजनसुते तत्त्वंमुनीन्द्रैःपरं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलं ॥ ॥९४॥ रामं रत्नकिरीटकुण्डलयुतं केयुरहारान्वितं सीतालंकृतवाम

भागममलंसिंहासनस्थं विभुं सुग्री
वादिहरीश्वरैःसुरगुणैः संसेव्यमानं
सदाविश्वामित्रपराशरादिमुनिभिः
संस्तूयमानं प्रभुं ॥९५॥ सकलगुण
निधानं योगिभिः स्तूयमानं भुज
विजितसमानं राक्षसेन्द्रादिमानं ।
महितनृपभयानं सीतया शोभमा
नं स्मरहृदयविमानं ब्रह्म रामाभि
धानं ॥ ९६ ॥ रघुवरतवमूर्तिर्मामि
के मानसाब्जे नरकगतिहरं ते ना
मधेयं मुखे मे । अनिशमतुलभ
क्त्यामस्तकं त्वत्पदाब्जे भवजल

यत्र यत्र दुर्जनसमीत गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

निधिमग्नं रक्षमामार्तबन्धो ९७॥ रामंरत्नमहं वन्दे चित्रकूटपतिं हरिं। कौसल्याभक्तिसंभूतंजानकीकण्ठभूषणं ॥ ९८ ॥ इति श्रीसनत्कुमारसंहितायां नारदोक्तं श्रीरामचन्द्रस्तवराजस्तोत्रं सम्पूर्णं ॥

अथ संक्षिप्तमूलरामायणप्रारम्भः।

श्रीगणेशाय नमः। तपः स्वाध्यायनिरतंतपस्वी वाग्विदां वरं। नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवं ॥१॥ कोन्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान्। धर्मज्ञ

श्च कृतज्ञश्च सत्यवाक्यो दृढव्र
तः ॥२॥ चारित्रेण च को युक्तः स
र्वभूतेषु को हितः । विद्वान्कः कः स
मर्थश्च कश्चैकः प्रियदर्शनः ॥३॥
आत्मवान्को जितक्रोधो द्युतिमा
न्कोऽनसूयकः । कस्य बिभ्यति दे
वाश्च जातरोषस्य संयुगे ॥ ४ ॥
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं
हि मे । महर्षे त्वं समर्थोऽसि ज्ञातु
मेवंविधं नरम् ॥५॥ श्रुत्वा चैतत्त्रि
लोकज्ञो वाल्मीकेर्नारदो वचः । श्रू
यतामिति चामन्त्र्य प्रहृष्टो वाक्य

यत्र यत्र दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

मब्रवीत् ॥६॥ बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः । मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तैःश्रूयतां नरः ॥७॥ इक्ष्वाकुवंशप्रभवो रामो नाम जनैःश्रुतः । नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥८॥ बुद्धिमान्नीतिमान्वाग्मी श्रीमान्शत्रुनिबर्हणः । विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥९॥ महोरस्को महेष्वासो गूढजत्रुररिन्दमः। आजानुबाहुःसुशिराःसुललाटः सुविक्रमः ॥१०॥ समः समविभक्तां

गः स्निग्धवर्णः प्रतापवान् । पीनव
क्षा विशालाक्षो लक्ष्मीवान् शुभल
क्षणः ॥११॥ धर्मज्ञः सत्यसन्धश्च
प्रजानां च हिते रतः । यशस्वी ज्ञा
नसम्पन्नः शुचिर्वश्यः समाधिमा
न ॥१२॥ प्रजापतिसमः श्रीमान्धा
ता रिपुनिषूदनः । रक्षिता जीवलो
कस्य धर्मस्य परिरक्षिता ॥१३॥ र
क्षिता स्वस्य धर्मस्य स्वजनस्य च
रक्षिता । वेदवेदाङ्गतत्त्वज्ञो धनुर्वे
दे च निष्ठितः ॥१४॥ सर्वशास्त्रार्थ
तत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।

यत्र वृथा दुर्जनसमाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा चाविद्य-

सर्वलोकप्रियःसाधुरदीनात्मा विच
क्षणः॥१५॥सर्वदाऽभिगतः सद्भिः
समुद्र इव सिन्धुभिः । आर्यः सर्वस
मश्चैव सदैव प्रियदर्शनः ॥१६॥ स
च सर्वगुणोपेतः कौसल्यानन्दवर्ध
नः । समुद्रइवगाम्भीर्ये धैर्येण हि
मवानिव ॥१७॥ विष्णुना सदृशो
वीर्ये सोमवत्प्रियदर्शनः । काला
ग्निसदृशःक्रोधे क्षमया पृथिवीसमः
॥१८॥ धनदेन समस्त्यागे सत्ये
धर्मइवापरः । तमेवं गुणसम्पन्न रा
मं सत्यपराक्रमं ॥१९॥ ज्येष्ठश्रेष्ठ

गुणैर्युक्तं प्रियं दशरथात्मजं । प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥२०॥ यौवराज्येनसंयोक्तुमैच्छत्प्रीत्यामहीपतिः । तस्याभिषेकसम्भारान् दृष्ट्वाभार्याऽथ कैकयी ॥२१॥ पूर्वं दत्तवरा देवी वरमेनमयाचत । विवासनं च रामस्य भरतस्याभिषेचनं॥२२॥स सत्य वचनाद्राजा धर्मपाशेनसंयुतः। विवासयामास सुतं रामं दशरथःप्रियं ॥२३॥ स जगाम वनं वीरःप्रतिज्ञामनुपालयन् । पितुर्वचननिर्देशात्कैकेय्याः

प्रियकारणात् ॥२४॥ तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगामह । स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः ॥२५॥ भ्रातरं दयितो भ्रातुःसौभ्रात्रमनुदर्शयन् । रामस्य दयितो भ्रातुः सुमित्रानन्दवर्धनः ॥ २६ ॥ जनकस्य कुलेजाता देवमायैव निर्मिता । सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥२७॥सीताप्यनुगता रामं शशिनं रोहिणी यथा । पौरैरनुगतो दूरं पित्रा दशरथेन च ॥२८॥ शृंगवेरपुरेसूतं गंगाकूले व्यसर्जय

त् । गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियं ॥२९॥ गुहेन सहितो रामो लक्ष्मणेन च सीतया । ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥३०॥ चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् । रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥३१॥ देवगंधर्वसंकाशास्तत्र ते न्यवसन्सुखं । चित्रकूटंगते रामे पुत्रशोकातुरस्तदा ॥३२॥ राजादशरथःस्वर्गं जगाम विलपन्सुतं । मृतेतु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥३३॥ नि

युज्यमानो राज्याय नैच्छद्राज्यंम
हाबलः । स जगाम वनं वीरो राम
पादप्रसादकः ॥३४॥ गत्वा तु सुम
हात्मानं रामं सत्यपराक्रमं । अया
चद् भ्रातरं राम मार्यभावपुरस्कृतं
॥३५॥ त्वमेव राजाधर्मज्ञ इति रा
मं वचोऽब्रवीत् । रामोपिपरमोदा
रः सुमुखः सुमहायशाः ॥३६॥ न
चैच्छत्पितुरादेशाद्राज्यं रामो म
हाबलः। पादुकेचास्य राज्याय न्या
सं दत्वा पुनःपुनः ॥३७॥ निवर्तया
मास ततो भरतं भरताग्रजः । स तु

काममवाप्यैव रामपादावुपस्पृशन्
॥३८॥ नन्दिग्रामेऽकरोद्राज्यं रामा
गमनकांक्षया । गते तु भरते श्रीमा
न्सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥
रामस्तु पुनरालक्ष्य नागरस्य जन
स्य च । तत्रागमनमेकाग्रो दण्डका
न्प्रविवेशह ॥४०॥ प्रविश्य तु महा
रण्यं रामो राजीवलोचनः । विराधं
राक्षसं हत्वा शरभंगं ददर्शह ४१॥
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्य
भ्रातरं तथा । अगस्त्यवचनाच्चैव
जग्राहैन्द्रं शरासनं॥४२॥ खड्गंच

परंप्रीतस्तूणौचाक्षय्यसायकौ। व
सतस्तस्यरामस्य वने वनचरैःसह
॥४३॥ ऋषयोऽभ्यागमन्सर्वे वधा
यासुररक्षसां। स तेषां प्रतिशुश्राव
राक्षसानां तथा वधे॥४४॥ प्रतिज्ञा
तश्च रामेण वधः संयति रक्षसाम्।
ऋषीणामग्निकल्पानां दंडकारण्य
वासिनाम् ॥४५॥ तेन तत्रैव वसता
जनस्थाननिवासिनी। विरूपिता
शूर्पणखा राक्षसी कामरूपिणी॥
॥४६॥ ततःशूर्पणखावाक्याद्युक्ता
न्सर्वराक्षसान्। खरं त्रिशिरसं चै

व दूषणं चैव राक्षसं ॥४७॥ निज
घान रणे रामस्तेषां चैव पदानुगा
न् । वने तस्मिन्निवसता जनस्था
ननिवासिनां ॥४८॥ रक्षसां निह
तान्यासन्सहस्राणि चतुर्दश । त
तो ज्ञातिवधं श्रुत्वा रावणः क्रोधमू
र्च्छितः ॥४९॥ सहायं वरयामास
मारीचंनाम राक्षसं । वार्यमाणःसुब
हुशो मारीचेन स रावणः ॥५०॥ न
विरोधो बलवता क्षमो रावण तेनते ।
अनादृत्य तु तद्वाक्यं रावणः काल
चोदितः ॥५१॥ जगाम सहमारीच

यत्र दृष्टा दुर्जनसमान गुरोः परिवादः संभूतदोषानुकथन निन्दा भावयेत्

स्तस्याश्रमपदंतदा । तेन मायावि ना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥ जहार भार्यां रामस्य गृध्रंहत्वा ज टायुषं । गृध्रं च निहतं दृष्ट्वा हृतांश्रु त्वा च मैथिलीं ॥५३॥ राघवःशोक संतप्तो विललापाकुलेन्द्रियः । त तस्तेनैव शोकेन गृध्रं दग्ध्वा जटायु षं ॥५४॥ मार्गमाणो बने सीतां र क्षसं संददर्शह । कबन्धं नामरूपेण विकृतं घोरदर्शनं ॥५५॥ तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः । स चास्य कथयामास शबरीं धर्मचा

रिणीं ॥५६॥ श्रमणां धर्मनिपुणामभिगच्छेतिराघव: । सोऽभिगच्छन्महातेजाः शबरीं शत्रुसूदनः ॥५७॥ शबर्या पूजितः सम्यग्रामो दशरथात्मजः । पम्पातीरे हनुमता संगतो वानरेण ह ॥ ५८॥ हनुमद्वचनाच्चैव सुग्रीवेण समागतः । सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥५९॥ आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः । सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥६०॥ चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकं । त

तौ वानरराजेन वैरानुकथनं प्रति ॥
॥६१॥ रामायवेदितं सर्वं प्रणयाद्दुः
खितेन च । प्रतिज्ञातं च रामेण त
दा वालिवधं प्रति ॥६२॥ वालिनश्च
बलं तत्र कथयामास वानरः। सुग्री
वःशङ्कितश्चासीन्नित्यं वीर्येण राघ
वे ॥६३॥ राघवप्रत्ययार्थं तु दुन्दुभेः
कायमुत्तमं । दर्शयामास सुग्रीवो
महापर्वतसन्निभं ॥६४॥ उत्स्मयि
त्वा महाबाहुः प्रेक्ष्य चास्थि महाब
लः । पादांगुष्ठेन चिक्षेप संपूर्णं दश
योजनं ॥६५॥ बिभेदच्च पुनस्ताला

न्सप्तैकेन महेषुणा । गिरिं रसात
लं चैव जनयन्प्रत्ययं तदा ॥६६॥
ततः प्रीतमनास्तेन विश्वस्तः स म
हाकपिः । किष्किन्धां रामसहितो
जगाम च गुहां तदा॥६७ततोऽगर्जद्ध
रिवरःसुग्रीवो हेमपिंगलः । तेन ना
देन महता निर्जगाम हरीश्वरः ॥
॥६८॥अनुमन्य तदा तारां सुग्रीवे
ण समागतः । निजघान च तत्रैव
शरेणैकेन राघवः ॥ ६९ ॥ ततः सु
ग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्यं राघवःप्रत्यपा

दयत् ॥७०॥ सच सर्वान्समानीय वानरान्वानरर्षभः। दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजां ७१ ततो गृध्रस्य वचनात्सम्पातेर्हनुमान्बली। शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवं ॥७२॥ तत्र लङ्कां समासाद्य पुरीं रावणपालितां। ददर्शसीतां ध्यायन्तीमशोकवनिकागतां ॥७३॥ निवेदयित्वा ऽभिज्ञानं प्रवृत्तिं विनिवेद्यच। समाश्वास्य च वैदेहीं मर्दयामासतोरणं ॥७४॥ पञ्च सेनाग्रगान्हत्वा सप्तमन्त्रिसु

तानपि । शूरमक्षं च निष्पिष्य ग्रह
णं समुपागमत् ॥७४॥ अस्त्रेणोन्मु
क्तमात्मानं ज्ञात्वा पैतामहाद्वरात्
। मर्षयन्राक्षसान्वीरो मन्त्रिणस्ता
न्यदृच्छया ॥७६॥ ततो दग्ध्वा पु
रीं लङ्कामृतेसीतां च मैथिलीं । रामा
य प्रियमाख्यातुं पुनरायान्महाक
पिः ॥७७॥ सोऽभिगम्य महात्मा
नंकृत्वारामंप्रदक्षिणं । न्यवेदयदमे
यात्मा दृष्ट्वा सीतातितत्त्वतः॥७८॥
ततःसुग्रीवसहितो गत्वा तीरं महो
दधेः । समुद्रं क्षोभयामास शरैरा

दित्यसन्निभैः ॥७९॥ दर्शयामास
चात्मानं समुद्रःसरितां पतिः । स
मुद्रवचनाच्चैव नलः सेतुमकारय
त् ॥८०॥ तेन गत्वा पुरीं लंकां ह
त्वा रावणमाहवे । रामः सीतामनु
प्राप्य परां व्रीडामुपागमत् ॥८१॥
तामुवाच ततो रामः परुषं जनसंस
दि । अमृष्यमाणा सा सीता विवे
श ज्वलनं सती ॥८२॥ ततोऽग्निव
चनात्सीतां ज्ञात्वा विगतकल्मषां।
कर्मणा तेन महता त्रैलोक्यं सचरा
चरं ॥८३॥ सदेवर्षिगणं तुष्टं रा

घवस्यमहात्मनः । बभौ रामः सुसं
हृष्टः पूजितः सर्वदैवतैः ॥८५॥ अ
भिषिच्य च लंकायां राक्षसेन्द्रं वि
भीषणं । कृतकृत्यस्तदा रामो वि
ज्वरः प्रमुमोदह ॥८५॥ देवताभ्यो
वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण
सुहृद्वृतः ॥८६॥ भारद्वाजाश्रमं ग
त्वा रामः सत्यपराक्रमः । भरतस्या
न्तिकं रामो हनूमन्तं व्यसर्जयत्
॥८७॥ पुनराख्यायिकां जल्पन्सु
ग्रीवसहितस्तदा । पुष्पकं तत्समा

रुह्य नान्दिग्रामं ययौ तदा ॥८८॥
नन्दिग्रामे जटां हित्वा भ्रातृभिःस
हितोऽनघः । रामःसीतामनुप्राप्य
राज्यंपुनरवाप्तवान् ॥८९॥ प्रहृष्ट
मुदितो लोक स्तुष्टःपुष्टःसधार्मिकः
निरामयो ह्यरोगश्च दुर्भिक्षभयव
र्जितः ॥९०॥ न पुत्रमरणं केचिद्द्र
क्ष्यन्ति पुरुषाः क्वचित् । नार्यश्चा
विधवा नित्यंभविष्यन्ति पतिव्रताः
॥९१॥ न चाग्निजं भयं किञ्चिन्ना
प्सु मज्जन्ति जन्तवः । न वात
जं भयं किञ्चिन्नापि ज्वर कृतं

तथा ॥९२॥ न चापि क्षुद्भयं तत्र न तस्करभयंतथा । नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥९३॥ नित्यं प्रमुदिताःसर्वे यथा कृतयुगे तथा । अश्वमेधशतैरिष्ट्वा बहुवस्त्रसुवर्णकैः ॥९४॥ गवांकोट्ययुतं दत्वा ब्रह्मलोकं गमिष्यति । असंख्येयंधनंदत्वा ब्राह्मणेभ्यो महायशाः ॥ ॥९५॥ राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः । चातुर्वर्ण्येषुलोकेऽस्मिन् स्वेस्वे धर्मे नियोक्ष्यति॥ ॥९६॥ दशवर्षसहस्राणि दशवर्षस

तानि च । रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥९७॥ इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितं । यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥९८॥ एतदाख्यानमायुष्यं पठन्रामायणं नरः सपुत्रपौत्रः सगणः प्रेत्यस्वर्गेमहीयते ॥९९॥ पठन्द्विजो वागृषभत्वमीयात् क्षत्रस्तथा भूमिपतित्वमीयात् । वणिग्जनः सस्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्वमीयात् ॥१००॥इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आ

दिकाव्ये नारदवाक्ये सांक्षिप्तःप्र०

अथ ब्रह्मदेवकृतरामस्तुतिप्रा० ।

श्रीगणेशाय नमः । ब्रह्मोवाच ।
वन्दे देवं विष्णुमशेषस्थितिहेतुंत्वा
मध्यात्मज्ञानि भिरन्तर्हृदिभाव्यं।
हेयाहेयद्वन्द्वविहीनं परमेकं सत्ता
मात्रं सर्वहृदिस्थं दृशिरूपम् १॥
प्राणापानौ निश्चयबुद्ध्या हृदिरु
द्ध्वा छित्त्वासर्वं संशयबंधं विषयौ
घान॥ पश्यन्तीशं यंगतमोहा यत
यस्तं वन्देरामं रत्नकिरीटं रविभा
सं ॥२॥ मायातीतं माधवमाद्यं ज

गदादिं मानातीतं मोहविनाशं मु
निवन्द्यं । योगिध्येयं योगविधानंप
रिपूर्णं वन्दे रामं रञ्जितलोकंरमणी
यं ॥३॥ भावाभावप्रत्ययहीनं भव
मुख्यैर्भोगासक्तैरर्चितपादाम्बुजयु
ग्मं । नित्यं शुद्धं बुद्धमनन्तं प्रणवा
ख्यं वन्दे रामं वीरमशेषासुरदावं ॥
॥ ४ ॥ त्वं मे नाथो नाथितकार्याखि
लकारी मायातीतो माधवरूपोऽखि
लधारी। भक्त्या गम्यो भावितरू
पो भवहारी योगाभ्यासैर्भावितचे
तः सहचारी ॥५॥ त्वामाद्यन्तं लो

कृतितीनां परमीशं लोकानां नो लौकिकमानैरधिगम्यं । भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलं ॥ ६ ॥ को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधव शक्तो मुनिमान्यं । वृन्दारण्ये वन्दितवृन्दारकवृन्दं वन्दे रामं भवमुखवन्द्यं सुखकन्दं ॥ ७ ॥ नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिं । मत्सेवार्थं मानुषभावं प्रतिपन्नं वन्दे रामं मरकतवर्णं मथुरेशं ॥८॥

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः । रामंश्यामंकामितकामप्रदमीशं ध्यात्वा ध्याता पातकजालैर्विगतः स्यात् ॥९॥ इति श्रीमदध्यात्मरामायणे युद्ध०ब्र०रामस्तोत्रं स० ॥

अथ रामहृदयप्रारम्भः ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ ततोरामःस्वयं प्राह हनुमन्तमुपास्थितं शृणु तत्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनां॥१॥ आकाशस्य यथा भेदास्त्रिविधोह

श्यते महान् ॥ जलाशये महाका
शस्तदवच्छिन्न एव हि ॥ प्रतिबिं
म्बाख्यमपरं दृश्यते त्रिविधं नभः
॥ २ ॥ बुद्ध्यवच्छिन्नचैतन्यमेकं
पूर्णमथापरं ॥ आभासस्त्वपरं बि
म्बभूतमेवं त्रिधाचितिः ॥३॥ सा
भासबुद्धेः कर्तृत्वमविच्छिन्नेऽवि
कारिणि । साक्षिण्यारोप्यते भ्रां
त्या जीवत्वं च तथाऽबुधैः ॥४॥आ
भासस्तु मृषाबुद्धिर विद्याकार्यमु
च्यते । अविच्छिन्नं तु तद्ब्रह्म विच्छे
दस्तु विकल्पितः ॥५॥ अविच्छि

न्नस्यपूर्णेन एकत्वं प्रतिपाद्यते। त
त्त्वमस्यादिवाक्यैश्च साभासस्या
हमस्तथा ॥६॥ ऐक्यज्ञानंयदोत्प
न्नं महावाक्येनचात्मनोः। तदा वि
द्या स्वकार्यैश्च नश्यत्येव न संश
यः ॥७॥ एतद्विज्ञाय मद्भक्तो मद्भा
वायोपपद्यते। मद्भक्तिविमुखानां
हि शास्त्रगर्तेषु मुह्यताम्। न ज्ञानं
न च मोक्षःस्या त्तेषां जन्मशतैरपि
॥८॥ इदं रहस्यं हृदयं ममात्मनो
मयैव साक्षात्कथितं तवानघ। म
द्भक्तिहीनाय शठाय न त्वया दात

व्यमैन्द्रादपि राज्यतोऽधिकं ॥९॥
इतिश्रीमदध्यात्म० बालकाण्डे श्री रामहृदयं सम्पूर्णं ।

अथ जटायुकृतरामस्तोत्रप्रारंभः ।

श्रीगणेशाय नमः । जटायुरुवाच । अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंतमादिहेतुम् । उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचन्द्रं ॥१॥ निरवधिसुखमिन्दिराकटाक्षं क्षपितसुरेन्द्रचतुर्मुखादिदुःखं । नरवरमनिशं नतोऽस्मरामं वरदमहं वरचापबाणह

स्तम् ॥२॥ त्रिभुवनकमनीयरूप
मीड्यं रविशतभासुरमीहितप्रदानं ।
शरणदमनिशं सुरागमूले कृतनिल
यं रघुनन्दनं प्रपद्ये ॥३॥ भवविपि
नदवाग्निनामधेयं भवमुखदैवतदै
वतं दयालुं । दनुजपतिसहस्रकोटि
नाशं रवितनयासदृशं हरिं प्रपद्ये ॥
॥४॥ अविरतभवभावनातिदूरं भव
विमुखैर्मुनिभिः सदैव दृश्यं । भव
जलधिसुतारणाऽङ्घ्रिपोतं शरणम
हं रघुनन्दनं प्रपद्ये ॥५॥ गिरिशगि
रिसुतामनोनिवासं गिरिवरधारिण

मीहिताभिरामं । सुरवरदनुजेन्द्र सेवितांघ्रिं सुरवरदं रघुनायकं प्रप द्ये ॥ ६ ॥ परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम् । प रहितनिरतात्मनां सुसेव्यं रघुवर मम्बुजलोचनं प्रपद्ये ॥७॥ स्मित रुचिरविकासिताननाब्जमतिसुल भसुरराजनीलनीलं । सितजलरुह चारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥८॥ हरिकमलजशम्भुरूप भेदात्त्वमिह विभासि गुणत्रयानुवृ सः । रविरिवजलपूरितोदपात्रेष्वम

रपतिस्तुतिपात्रमीशमीडे ॥९॥ र
तिपतिशतकोटिसुन्दरांगं शतपथ
गोचरभावनाविदूरं। यतिपतिहृदये
सदा विभातं रघुपतिमार्तिहरं प्रभुं
प्रपद्ये ॥१०॥ इत्येवं स्तुवतस्तस्य
प्रसन्नोऽभूद्रघूत्तमः । उवाच गच्छ
भद्रं ते मम विष्णोःपरं पदं ॥ ११ ॥
शृणोति य इदं स्तोत्रं लिखेद्वा निय
तःपठेत् । स याति मम सारूप्यं म
रणे मत्स्मृतिं लभेत् ॥१२॥ इतिरा
घवभाषितं तदा श्रुतवान्हर्षसमाकु
लोद्विजः । रघुनन्दनसाम्यमास्थि

तः प्रययौब्रह्मसुपूजितं पदं ॥१३॥
इति श्रीमदध्यात्मरामायणे आर
ण्यकाण्डेजटायुकृत रामस्तोत्रं सं०

अथ श्रीसीतारामाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । ब्रह्ममहेन्द्र
सुरेन्द्र मरुद्गणरुद्र मुनीन्द्र गणै
रतिरम्यं क्षीरसरित्पतितीरमुपेत्य
नुतं हि सतामवितारमुदारं । भूमि
भरप्रशमार्थमथ प्रथितप्रकटीकृत
चिद्घनमूर्तिं त्वां भजतो रघुनन्द
नदेहि दयाघनमे स्वपदाम्बुजदा
स्यम् ॥१॥ पद्मदलायतलोचन हे

रघुवंशविभूषण देव दयालो निर्मल
नीरदनीलतनोऽखिल लोकहृदम्बु
जभासकभानो । कोमलगात्र पवि
त्रपदाब्जरजःकणपावितगौतमका
न्तंत्वां भजतो० ॥२॥ पूर्ण परात्पर
पालयमामतिदीन मनाथमनन्तसु
खाब्धे प्रावृडदभ्रतडित्सुमनोहरपी
तवराम्बर राम नमस्ते । कामविभ
ञ्जन कान्ततरानन काञ्चनभूषण
रत्नकिरीटं त्वां भजतो० ॥३॥ दि
व्यशरच्छशिकान्तिहरोज्ज्वल मौ
क्तिकमालविशालसुमौले कोटिरवि

प्रभ चारुचरित्र पवित्र विचित्रधनुः शरपाणे । चण्डमहाभुजदण्डविखण्डित राक्षसराजमहागजदण्डं त्वां भजतो० ॥४॥ दोषविहिंस्रभुजङ्गसहस्रसुरोषमहानलकीलकलापे जन्मजरामरणोर्मिमनोमद मन्मथनक्रविचक्रभवाब्धौ । दुःखनिधौ च चिरं पतितं कृपयाऽद्यसमुद्धर राम ततो मां त्वां भजतो० ॥५॥ संसृतिघोरमदोत्कटकुञ्जर तृट्क्षुन्नीरदपिण्डिततुण्डं दण्डकरोन्मथितं च रजस्तमउन्मदमोह पदोज्झितमार्तं

म् । दीनमनन्यगतिं कृपणं शरणा
गतमाशु विमोचय मूढं त्वां भ० ॥
॥६॥ जन्मशतार्जितपापसमन्वित
हृत्कमले पतिते पशुकल्पे हेरघुवी
र महारणधीर दयां कुरु मय्यतिम
न्दमनीषे । त्वं जननीभगिनी च पि
ता ममतावदसि त्वविताऽपि कृपा
लो त्वां भजतो० ॥७॥ त्वां तु द
यालुमकिंचनवत्सल मुत्पलहारम
पारमुदारं राम विहाय कमन्यमना
मयमीशजनंशरणंननुयायाम् । त्व
त्पदपद्ममतःश्रितमेव मुदा खलु दे

वसदाऽव ससीतं त्वां भजतो० ८॥
यःकरुणामृतसिन्धुरनाथजनोत्तम
बन्धुरजोत्तमकारी भक्तभयोर्मिभ
वाब्धितरी सरयूतटिनीतटचारुवि
हारी । तस्य रघुप्रवरस्यनिरन्तर
मष्टकमेतदनिष्टहरं वै यस्तु पठेद
मरः स नरो लभतेऽच्युत रामपदा
म्बुजदास्यम् ॥९॥ इति श्रीमन्मधु
सूदनाश्रमशिष्याऽच्युत यतिविर
चितं श्रीमत्सीतारामाष्टकं सं० ।

अथ रामाष्टकप्रारम्भः ।

श्रीगणेशाय नमः ॥ भजे विशे

... दुर्जनसंघाते गुरोः मारवादः ...

पसुन्दरं समस्तपापखण्डनं । स्व
भक्तचित्तरञ्जनं सदैव राममद्वयं
॥१॥ जटाकलापशोभितं समस्त
पापनाशकं । स्वभक्तभीतिभञ्जनं
भजेहराममद्वयं ॥२॥ निजस्वरू
पबोधकं कृपाकरं भवापहं । समंशि
वंनिरञ्जनं भजेहराममद्वयं ॥ ३ ॥
सदा प्रपञ्चकल्पितं ह्यरामरूपवा
स्तवं । निराकृतिं निरामयं भजेह
राममद्वयं ॥४॥ निष्प्रपञ्चनिर्विक
ल्पनिर्मलं निरामयं ॥ चिदेकरूप
सन्ततं भ० ॥५॥ भवाब्धिपोतरूप

कं त्वशेषदेहकल्पितं ॥ गुणाकरं कृपाकरं भ० ॥ ६ ॥ महावाक्यबोधकैर्विराजमानवाक्पदैः ॥ परब्रह्म व्यापकं भ० ॥ ७ ॥ शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहं । विराजमानदैहिकं भ० ॥ ८ ॥ रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेनभाषितमिदं शृणुते मनुष्यः । विद्यांश्रियं विपुलसौख्यमनन्तकीर्तिं संप्राप्य देहविलये लभते च मोक्षं ॥ ९ ॥ इतिश्रीव्यासविरचितंरामाष्टकं० ॥

अथ श्रीमहादेवकृतरामस्तुतिप्रारम्भः ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ नमोस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय किरीटहारांगदभूषणाय सिंहासनस्थाय महाप्रभाय ॥ १ ॥ त्वमादिमध्यान्तविहीनएकः सृजस्यवस्यत्सि च लोकजातं । स्वमायया ते न नलिप्यसेत्वं यत्स्वे सुखेऽजस्त्रतोऽनवद्यः॥२॥ लीलां विधत्से गुणसंवृतस्त्वं प्रपन्नभक्तानुविधान हेतोः । नानाऽवतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यं ॥३॥

स्वांशेन लोकं सकलं विधाय तं वि
भर्षिच त्वं तदधः फणीश्वरः । उप
र्यधो भान्वनिलोडुपौषधीमवर्षरू
पोऽवसि नैकधाजगत् ॥४॥ त्वमि
ह देहभृतां शिखिरूपः पचसि भक्त
मशेषमजस्रं । पवनपञ्चकरूपसहा
यो जगदखण्डमनेन बिभर्षि ॥५॥
चन्द्रसूर्यशिखिमध्यगतं यत्तेज ई
श चिदशेषतनूनाम् । प्राभवत्तनु
भृतामिह धैर्यशौर्यमायुरखिलं तव
सत्त्वं ॥६॥ त्वं विरिञ्चिशिवविष्णुवि
भेदात्कालकर्मशशिसूर्यविभागात्

वादिनां पृथगिवेश विभासि ब्रह्मनि
श्चितमनन्यदिहैकं ॥७॥ मत्स्या
दिरूपेण तथा त्वमेकः श्रुतौ पुराणे
षु च लोकसिद्धः। तथैव सर्वं सदस
द्विभागस्त्वमेव नान्यद्भवतो वि
भाति ॥८॥ यद्यत्समुत्पन्नमनन्त
सृष्टावुत्पत्स्यते यच्च भवच्च यच्च
। न दृश्यते स्थावरजङ्गमादौ त्वया
विनातःपरतःपरस्त्वं ॥९॥ तत्त्वं न
जानन्ति परात्मनस्ते जनाः सम
स्तास्तव माययाऽतः। त्वद्भक्तसे
वामलमानसानां विभाति तत्त्वं पर

मेकमैशं ॥१०॥ ब्रह्मादयस्ते न वि
दुःस्वरूपं चिदात्मतत्वं बहिरर्थभा
वाः। ततो बुधस्त्वामिदमेवरूपं भ
क्त्याभजन्मुक्तिमुपैत्यदुःखः ११॥
अहं भवन्नामगुणैः कृतार्थो वसामि
काश्यामनिशं भवान्या। मुमूर्षमा
णस्य विमुक्तयेऽहं दिशामि मन्त्रं त
व रामनाम ॥१२॥ इमं स्तवं नित्य
मनन्यभक्त्या शृण्वन्ति गायन्ति
लिखन्ति ये वै। ते सर्वसौख्यं परमं
चलब्ध्वा भवत्पदं यान्ति भवत्प्रसा
दात् ॥१३॥ इति श्रीमहादेवकृत

रामस्तोत्रं सम्पूर्णं ।

अथ अहल्याकृतरामस्तोत्रप्रारंभः ।

श्रीगणेशाय नमः । अहल्योवाच । अहोकृतार्थोऽस्मि जगन्निवास ते पादाब्जसंलग्नरजःकणावहं । स्पृशामि यत्पद्मजशङ्करादिभिर्विमृग्यते रन्धितमानसैःसदा ॥ १ ॥ अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमोहितं जगत् । चलस्यजस्रं चरणादिवर्जितः सम्पूर्ण आनन्दमयोऽतिमायिकः ॥२॥ यत्पादपंकजपरागपवित्रगात्रा भागी

रथी भवविरिञ्चिमुखान्पुनाति। सा
क्षात्सएव मम दृग्विषयोयदास्ते
किं वर्ण्यते मम पुराकृतभागधेयं ॥
॥३॥ मर्त्यावतारे मनुजाकृतिं ह
रिं रामाभिधेयं रमणीयदेहिनं। ध
नुर्धरं पद्मविशाललोचनं भजामिनि
त्यं न परान्भजिष्ये ॥४॥ यत्पादपं
कजरजःश्रुतिभिर्विमृग्यं यन्नाभिपं
कजभवःकमलासनश्च। यन्नाम
साररसिको भगवान्पुरारिस्तं राम
चन्द्रमनिशं हृदि भावयामि ॥५॥
यस्यावतारचरितानि विरञ्चिलोके

गायन्ति नारदमुखा भवपद्मजाद्याः
आनन्दजाश्रुपरिषिक्त कुचाग्रसी
मा वागीश्वरीचतमहं शरणं प्रपद्ये
॥६॥ सोयं परात्मापुरुषःपुराणएष
स्वयंज्योतिरनन्तआद्यः। मायात
नुं लोकविमोहनीयां धत्ते परानुग्रह
एष रामः ॥७॥ अयं हि विश्वोद्भव
संयमानामेकः स्वमायागुणबिम्बि
तोयः । विरञ्चिविष्ण्वीश्वरनामभे
दान् धत्तेस्वतन्त्रः परिपूर्ण आत्मा
॥८॥ नमोस्तुते राम तवांघ्रिपङ्कजं
श्रिया धृतं वक्षसि लालितं प्रियात्।

आक्रान्तमेकेन जगत्त्रयं पुरा ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥९॥ जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः। सर्वभूतेष्वसंयुक्त एको भाति भवान्परः ॥ १० ॥ ॐकारवाच्यस्त्वं रामवाचामविषयःपुमान्। वाच्यवाचकभेदेन भवानेवजगन्मयः ॥११॥ कार्यकारणकर्तृत्व फलसाधनभेदतः। एकोविभासि रामस्त्वं मायया बहुरूपया ॥१२॥ त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः। मानुषंत्वाभिमन्यन्तेमायि

नं परमेश्वरं ॥१३॥ आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः । असं गो ह्यचलो नित्यःशुद्धोबुद्धःसदव्य यः ॥१४॥ योषिन्मूढाहमज्ञा ते त त्त्वं जाने कथं विभो । तस्मात्ते श तशो राम नमस्कुर्यामनन्यधीः ॥ ॥२५॥ देव मे यत्र कुत्रापि स्थिता या अपि सर्वदा । त्वत्पाद कमले सक्ता भक्तिरेव सदास्तु मे ॥१६॥ नमस्ते पुरुषाध्यक्ष नमस्ते भक्तव त्सल । नमस्तेऽस्तु हृषीकेश नारा यण नमोस्तु ते ॥१७॥ भवभयहर

मेकं भानुकोटिप्रकाशं करधृतशर
चापं कालमेघावभासं। कनकरुचि
रवस्त्रं रत्नवत्कुण्डलाढ्यं कमल
विशदनेत्रं सानुजं राममीडे॥१८॥
स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः
स्थितं। परिक्रम्य प्रणम्याशु सानु
ज्ञाता ययौ पतिम् ॥१९॥ अहल्य
या कृतं स्तोत्रं यःपठेद्भक्तिसंयुतः।
स मुच्यतेऽखिलैः पापैः परब्रह्माधि
गच्छति॥२०॥पुत्राद्यर्थं पठेद्भक्त्या
रामं हृदि निधाय च।संवत्सरेण ल
भते वन्ध्या अपि सुपुत्रकं। सर्वां

न्कामानवाप्नोति रामचन्द्रप्रसाद
तः ॥२१॥ ब्रह्मघ्नो गुरुतल्पगोपि
पुरुषः स्तेयी सुरापोऽपि वा मातृ
भ्रातृविहिंसिकोऽपि सततं भोगैक
बद्धातुरः । नित्यं स्तोत्रमिदं जपन्
रघुपतिं भक्त्या हृदिस्थं स्मरन्
ध्यायन्मुक्तिमुपैति किं पुनरसौस्वा
चारयुक्तो नरः ॥२२॥ इति श्रीम
दध्यात्मरामायणे उमामहेश्वरसं
वादे बालकाण्डान्तर्गतमहल्याकृतं
रामचन्द्रस्तोत्रं सम्पूर्णं ।

अथ इन्द्रकृतरामस्तोत्र प्रारम्भः ।

श्रीगणेशाय नमः। इन्द्र उवाच।
भजेऽहं सदा राममिन्दीवराभं भवा
नीहृदाभावितानन्दरूपं भवाभाव
हेतुं भवादिप्रपन्नम् ॥१॥ सुरानी
कदुःखौघनाशैकहेतुं नराकारदेहं
निराकारमीड्यं। परेशं परानन्दरू
पं वरेण्यं हरिं राममीशं भजेभारना
शं ॥२॥ प्रपन्नाखिलानन्ददोहं प्रप
न्नं प्रपन्नार्तिनिःशेषनाशाभिधानं
तपोयोगयोगीशभावाभिभाव्यं क
पीशादिमित्रं भजे राममित्रं॥३॥स
दाभोगभाजां सुदूरे विभातं सदा

योगभाजामदूरे विभातं । चिदानंदकन्दं सदा राघवेशं विदेहात्मजानन्दरूपं प्रपद्ये ॥४॥ महायोगमायाविशेषानुयुक्तो विभासीशलीलानराकारवृत्तिः । त्वदानन्दलीलाकथापूर्णकर्णाःसदानन्दरूपा भवन्तीह लोके ॥५॥ अहं मानपानाभिमत्तप्रमत्तो न वेदाखिलेशाभिमानाभिमानः । इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः ॥६॥ स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम्।

शरच्चन्द्रवक्त्रंलसत्पद्मनेत्रं दुरावा
रपारं भजे राघवेशं ॥७॥ सुराधी
शनीलाभ्रनीलाङ्गकान्तिं विराधादि
रक्षोवधाल्लोकशान्तिम् । किरीटा
दिशोभंपुरातिलोभं भजे रामचन्द्रं
रघूणामधीशं ॥८॥ लसच्चन्द्रको
टिप्रकाशादिपीठे समासीनमेकं स
माधाय सीताम् । स्फुरद्धेमवर्णां त
डित्पुञ्जभासं भजे रामचन्द्रं निवृ
त्तार्तितन्द्रम् ॥९॥ इति श्रीमदध्या
त्मरामायणे युद्धकाण्डे इन्द्रकृतं
रामस्तोत्रं सम्पूर्णं ।

अथ धन्याष्टक मारम्भः ।

श्रीगणेशाय नमः । तज्ज्ञानं प्र
शमकरं यदीन्द्रियाणां यज्ज्ञेयं यदु
पनिषत्सु निश्चितार्थं । ते धन्या भु
वि परमार्थनिश्चितेहाःशेषास्तु भ्र
मनिलये परिभ्रमन्ति ॥१॥ आदौ
विजित्य विषयान्मदमोहरागद्वेषा
दिशत्रुगणमाहृतयोगराज्यः । ज्ञा
त्वामृतं समनुभूय परात्मविद्या का
न्तासुखा बत गृहे विचरन्तिधन्या
॥२॥ त्यक्त्वा गृहेरतिमनोगतिहे
तुभूता मात्मेच्छयोपनिषदर्थरसं

पिबन्तः। वीतस्पृहा विषयभोगप
दे विरक्ता धन्याश्चरन्तिविजनेषु
विरक्तसंगाः ॥३॥ त्यक्त्वा ममाह
मिति बन्धकरे पदे द्वे मानावमान
सदृशाः समदर्शिनश्च। कर्तारम
न्यमवगम्य तदर्पितानि कुर्वन्तिक
र्मपरिपाकफलानि धन्याः ॥४॥त्य
क्त्वैषणात्रयमवेक्षितमोक्षमार्गा भै
क्ष्यामृतेन परिकल्पितदेहयात्राः।
ज्योतिः परात्परतरं परमात्मसंज्ञं
धन्याद्विजा रहसि हृद्यवलोकयंति
॥५॥ नासन्नसन्नसदसन्न महन्न

चाणु न स्त्रीपुमान्न च नपुंसकमेक
बीजं । यैर्ब्रह्म तत्समनुपासितमेक
चित्ता धन्या विरेजुरितरे भवपाश
बद्धाः ॥६॥ अज्ञानपंकपरिमग्नम
पेतसारं दुःखालयं मरणजन्मजरा
वसक्तं । संसारबन्धनमनित्यमवे
क्ष्य धन्या ज्ञानासिना तदवशीर्य
विनिश्चयन्ति ॥७॥ शान्तैरनन्यम
तिभिर्मधुरस्वभावै रेकत्वनिश्चित
मनोभिरपेतमोहैः । साकं वनेषु वि
जितात्मपदस्वरूपं शास्त्रेषु सम्य
गनिशं विमृशन्ति धन्याः ॥८॥ अ

हिमिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तुकामो विरागी । विषमिव विषयान्यो मन्यमानो दुरन्ताञ्जयतिपरमहंसो मुक्तिभावं समेति ॥९॥ सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमाः गांगं वारिसमस्तवारिनिवहः पुण्याः समस्ताःक्रियाः । वाचः प्राकृतसंस्कृताःश्रुतिशिरोवाराणसी मेदिनी सर्वावास्थितिरस्य वस्तुविषयादृष्टे परब्रह्मणि ॥१०॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्करा

चार्यविरचितं धन्याष्टकस्तोत्रं सं०

अथ विज्ञाननौकाप्रारम्भः ।

श्रीगणेशाय नमः । तपोयज्ञदा
नादिभिःशुद्धबुद्धिर्विरक्तो नृपादौ प
दे तुच्छबुद्ध्या । परित्यज्य सर्वं य
दाप्नोति तत्त्वं परं ब्रह्मनित्यं तदे
वाहमस्मि ॥१॥ दयालुं गुरुं ब्रह्म
निष्ठं प्रशान्तं समाराध्य मत्या वि
चार्यस्वरूपं । यदाप्नोति तत्त्वं नि
दिध्यास्यविद्वान्प० ॥२॥ यदानंद
रूपं प्रकाशस्वरूपं निरस्तप्रपञ्चं प
रिच्छेदशून्यं । अहं ब्रह्मवृत्त्यैकग

म्यं तुरीयं प० ॥३॥ यदज्ञानतोभा
ति विश्वं समस्तं विनष्टं च सद्यो
यदात्मप्रबोधे । मनोवागतीतं विशु
द्धं विमुक्तं प० ॥४॥ निषेधे कृते ने
तिनेतीतिवाक्यैः समाधिस्थितानां
यदा भातिपूर्णं । अवस्थात्रयातीत
मेकं तुरीयं प०५ यदानन्दलेशैः स
मानन्दिविश्वं यदाभाति सत्वेतदा
भातिसर्वं । यदालोचनेरूपमन्यत्
समस्तं प० ६ अनन्तं विभुं सर्वयो
निं निरीहं शिवं संगहीनं यदोंकार
गम्यं । निराकारमत्युज्ज्वलंमृत्यु

हीनं प० ॥७॥ यदानन्दसिन्धौ नि
मग्नः पुमान् स्यादविद्याविलासः स
मस्तप्रपञ्चः । यदा न स्फुरत्यद्भु
तं यन्निमित्तं प० ॥८॥ स्वरूपानु
सन्धानरूपांस्तुतिं यः पठेदादराद्भ
क्तिभावो मनुष्यः । शृणोतीह वा नि
त्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेद
प्रमाणात् ॥९॥ विज्ञाननावं परिगृ
ह्य कश्चित्तरेद्यदज्ञानमयं भवाब्धि
म् । ज्ञानासिना यो हि विच्छिद्य तृ
ष्णां विष्णोःपदं याति स एव धन्यः
॥१०॥ इति श्रीमत्परमहंसपरिव्रा

जकाचार्य श्रीमच्छं० वि० ॥

अथ द्वादशपञ्जरिकास्तोत्रप्रारम्भः ।

श्रीगणेशाय नमः । मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णां । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तं ॥१॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यं । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः २॥ का ते कान्ता कस्ते पुत्रः संसारोयमतीव विचित्रः । कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय यदिदं भ्रा

न्तः ॥३॥ माकुरु जनधनयौवनगर्वं हरति निमेषात्कालःसर्वं । मायामयमिदमखिलं हित्वाब्रह्मपदं त्वं प्रविश विदित्वा ॥४॥ कामं क्रोधं मोहं लोभं त्यक्त्वात्मानं भावय कोऽहं । आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥५॥ सुरमन्दिरतरुमूलनिवासः शय्याभूतलमजिनं वासः । सर्वपरिग्रहभोगत्यागःकस्य सुखं न करोति विरागः ॥६॥ शत्रौमित्रेपुत्रेबन्धौ माकुरुयत्नंविग्रहसन्धौ । भव समचित्तःस

र्वत्रत्वं वाञ्छस्य चिराद्यदि विष्णुत्वं ॥७॥ त्वयिमयिचान्यत्रैकोविष्णुर्व्यर्थंकुप्यसिसर्वसहिष्णुः । सर्वस्मिन्नपिपश्यात्मानं सर्वत्रोत्सृजभेदज्ञानं ॥८॥ प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारं। जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानं ॥९॥ नलिनीदलगतसलिलंतरलं तद्वज्जीवितमतिशयचपलं । विद्धिव्याध्यभिमानग्रस्तं लोकंशोकहतंचसमस्तं ॥१०॥ का तेऽष्टादशदेशेचिन्ता वातुल तव किं

नास्तिनियन्ता । यस्त्वांहस्तेसुद
ढनिबद्धं बोधयति प्रभवादिविरुद्धं
॥११॥ गुरुचरणाम्बुजनिर्भरभक्तः
संसारादचिराद्भवमुक्तः । सेन्द्रिय
मानसनियमादेवंद्रक्ष्यसिनिजहृद
यस्थंदेवं ॥१२॥ द्वादशपञ्जरिकाम
एषः शिष्याणां कथितोह्युपदेशः।
येषांचित्तेनैवविवेकस्ते पच्यन्तेनर
कमनेकं ॥१३॥ इति श्रीमच्छंकरा
चार्यविरचितं द्वादशपंजरिकास्तो
त्रं सम्पूर्णं ॥

अथ हस्तामलकस्तोत्रमारम्भः।

श्रीगणेशाय नमः ॥ कस्त्वं शि
शो कस्य कुतोऽसि गन्ता किं ना
म ते त्वं कुत आगतोऽसि । एतन्म
योक्तं वद चार्भक त्वं मत्प्रीतये प्री
तिविवर्धनोसि ॥१॥ हस्तामलक उ
वाच ॥ नाहं मनुष्यो न च देवयक्षो
न ब्राह्मणक्षत्रियवैश्यशूद्राः । न ब्र
ह्मचारी न गृही नवस्थो भिक्षुर्नचा
हं निजबोधरूपः ॥२॥ नचित्तं मन
श्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपा
धिराकाशकल्पः । रविर्लोकचेष्टा
निमित्तं यथा यः स नित्योपलब्धि

स्वरूपोऽहमात्मा ॥ ३ ॥ यमग्न्यु
ष्णवन्नित्यबोधस्वरूपं मनश्चक्षु
रादीन्यबोधात्मकानि । प्रवर्तन्त
आश्रित्य निष्कम्पमेकं सनित्यो
प० ॥४॥ मुखाभासको दर्पणे दृश्य
मानो मुखत्वात्पृथक्त्वेन नैवास्ति
वस्तु । चिदाभासको धीषु जीवोऽपि
तद्वत्सनि० ॥५॥ यथा दर्पणाभाव
आभासहानौमुखं विद्यते कल्पना
हीनमेकं : तथा धीवियोगे निराभा
सको यः स नि० ॥६॥ मनश्चक्षुरा
देर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्म

नश्चक्षुरादिः । मनश्चक्षुरा देरग
म्यस्वरूपः स नि० ॥७॥ य एको
विभाति स्वतःशुद्धचेताः प्रकाशस्व
रूपोऽपि नानेव धीषु । शरावोदक
स्थो यथा भानुरेकः सनि० ॥८॥ य
थाऽनेकचक्षुः प्रकाशो रविर्न क्रमेण
प्रकाशीकरोति प्रकाश्यं । अनेका
धियो यस्तथैकः प्रबोधः सनि ॥९॥
विवस्वत्प्रभातं यथारूपमक्षं प्रग
ह्णाति नाभातमेवं विवस्वान् ॥ य
दाभातआभासयत्यक्षमेकं स नि०
॥१०॥ यथा सूर्य एकोऽप्स्वनेकश्च

लासु स्थिरास्वप्यनन्यद्विभाव्यस्व
रूपः : चलासु प्रभिन्नासु धीष्वेक
एव स नि० ॥११॥ घनच्छन्नदृष्टि
र्घनच्छन्नमर्कं यथा निष्प्रभं मन्य
ते चातिमूढः । तथाबद्धवद्भाति यो
मूढदृष्टेः स नि० ॥१२॥ समस्तेषु
वस्तुष्वनुस्यूतमेकं समस्तानि व
स्तूनि यन्न स्पृशान्ति । वियद्वत्स
दा शुद्धमच्छस्वरूपं सनि० ॥१३॥
उपाधौ यथाभेदता सन्मणीनां त
था भेदता बुद्धिभेदेषु तेऽपि ॥ यथा
चन्द्रिकाणां जले चञ्चलत्वं तथा च

श्चलत्वं तवापीह वष्णो ॥ १४ ॥ इति श्रीमच्छङ्कराचार्यकृतं हस्तामलकसंवादस्तोत्रं सम्पूर्णं ॥

अथ पंचरत्नमालिकास्तोत्रप्रारम्भः ।

श्रीगणेशाय नमः ॥ वेदो नित्यमधीयतांतदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यतां । पापौघःपरिधूयतां भवसुखे दोषोनुसंधीयतामात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यतां ॥१॥ संगःसत्सु विधीयतां भगवतो भक्तिर्दृढा धी

यतां शान्त्यादिः परिचीयतां दृढ
तरं कर्माशु सन्यस्यतां । सद्विद्वा
नुपसर्प्प्यतामनुदिनं तत्पादुकासे
व्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशि
रोवाक्यं समाकर्ण्यतां ॥२॥ वाक्या
र्थश्चविचार्यतां श्रुतिशिरःपक्षः स
माश्रीयतां दुस्तर्कात्सु विरम्यतां
श्रुतिमतस्तर्कोऽनुसन्धीयतां । ब्र
ह्मास्मीतिविभाव्यतामहरहो गर्वः
परित्यज्यतां देहेऽहं मतिरुज्झ्य
तांबुधजनैर्वादः समुत्सृज्यतां॥३॥
क्षुद्व्याधिश्चचिकित्स्यतां प्रतिदिनं

भिक्षौषधं भुज्यतां स्वाद्वन्नं न च याच्यतां विधिवशात्प्राप्तेन सन्तुष्यतां। औदासीन्यमभीप्स्यतां जनकृपा नैष्ठुर्यमुत्सृज्यतां शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतां ॥४॥ एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यतां। प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयतां ॥ ५ ॥ इ

ति श्रीमच्छङ्करा० पञ्चरत्नमालि
कास्तोत्रं सम्पूर्णं ।

अथ वैराग्यपञ्चकप्रारम्भः ।

श्रीगणेशाय नमः । शिलं किम
नलं भवेदनलमौदरं बाधितुंपयः प्र
सृतिपूरकं किमु न धारकं सारकं ।
अयत्नमलमल्पकं पथिपटच्चरं क
च्चरं भजन्ति विबुधामुधा अहहकु
क्षितःकुक्षितः ॥१॥ दुरीश्वरद्वारब
हिर्वितर्दिकादुरासिकायै रचितोय
मंजलिः। यदंजनाभंनिरपायमस्ति
नोधनंजयस्यन्दनभूषणं धनं ॥२॥

काचाय नीचं कमनीयवाचा मोचा
फलस्वादमुचा न याचे । दयाकुचै
ले धनदत्कुचेलेस्थितेऽकुचेले श्रित
माकुचैले ॥३॥ क्षोणीकोणशतां श
पालनखलद् दुर्वारगर्वानल क्षुभ्य
त्क्षुद्रनरेन्द्रचाटुरचनां धन्यां न म
न्यमहे । देवं सेवितुमेव निश्चिनुमहे
योसौदयालुःपुरा धानामुष्टिमुचेकु
चैतलमुनये धत्तेस्मवित्तेशतां ४ श
रीरपतनावधि प्रभुनिषेवणापादना
दबिंधनधनंजयप्रशमदं धनंदंधनं।
धनं जयविवर्धनं धनंमुदूढगोवर्धनं

सुसाधनमबाधनं सुमनसां समारा
धनं ॥५॥ इतिश्रीसर्वतन्त्रस्वतन्त्र
वेदान्ताचार्यकृतं वैराग्यपंचकं स०

अथ गुरुवरप्रार्थनापंचरत्नस्तोत्र प्रारंभः।

श्रीगणेशाय नमः । यं विज्ञातुं
भृगुःस्वं पितरमुपगतः पंचवारं य
थावज्ज्ञानादेवामृताप्तः सततमनु
पमं चिद्विवेकादि लब्ध्वा । तस्मैतु
भ्यंनमः श्रीहरिहरगुरवे सच्चिदान
न्दमुक्ता नन्ताद्वैतप्रतीते न कुरु
कितवतां पाहि मां दीनबन्धो ॥१॥
यस्माद्दृश्यस्य जन्मस्थितिविल

यामिमे तैत्तिरीयाः पठन्ति स्वा
विद्यामात्रयोगात्सुखशयनतले मु
ख्यतः स्वप्नवच्च ॥ त० ॥२॥ यो
वेदान्तैकलभ्यः श्रुतिषु नियमित
स्तैत्तिरीयैश्च कण्वैरन्यैरप्यानिषे
कादुदयपरिमितं चारुसंस्कारभा
जाम् ॥ त० ॥३॥ यस्मिन्नेवावस
न्नाः सकलनिगमवाङ्मौलयः सुप्त
पुंसि प्रोक्तं तन्नाम यद्वान्निजमहिम
गतध्वान्ततत्कार्यरूपे ॥ त० ॥४॥
चित्वात्संकल्पपूर्वं सृजति जगदि
दं योगिवन्मायया यः स्वात्मन्येवा

द्वितीये परमसुखदृशि स्वप्नवद्भू म्निनित्ये ॥त० ५॥ इत्यच्युतविरचितं गुरुवरप्रार्थनापंचरत्नस्तोत्रं स०

आत्मबोधप्रारंभः ।

श्रीगणेशाय नमः । तपोभिः क्षीणपापानां शान्तानां वीतरागिणां । मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥१॥ बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् । पाकस्य वह्निवज्ज्ञानं विनामोक्षोनासिध्यति ॥२॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत् । विद्याऽविद्यां निह

द्वितीये परमसुखदाशि स्वप्नवद्भू म्निनित्ये ॥त०५इत्यच्युतविरचि तं गुरुवरप्रार्थनापंचरत्नस्तोत्रं स०

आत्मबोधप्रारंभः।

श्रीगणेशाय नमः। तपोभिःक्षी णपापानां शान्तानां वीतरागिणां। मुमुक्षूणामपेक्ष्योऽयमात्मबोधो वि धीयते ॥१॥ बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम्। पाकस्य वह्निवज्ज्ञानं विनामोक्षोनासिध्यति ॥२॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत्। विद्याऽविद्यां निह

न्त्येव तेजस्तिमिरसंघवत् । परि
च्छिन्न इवाज्ञानात्तन्नाशे सति के
वलः । स्वयं प्रकाशते ह्यात्मा मेघा
पायेंऽशुमानिव ॥४॥ अज्ञानकलुषं
जीवं ज्ञानाभ्यासाद्धि निर्मलं । कृ
त्वाज्ञानं स्वयं नश्येज्जलं कतकरे
णुवत् ५ संसारः स्वप्नतुल्यो हि राग
द्वेषादिसंकुलः । स्वकाले सत्यवद्भा
ति प्रबोधे सत्यसद्भवेत् ६ तावत्सत्यं
जगद्भाति शुक्तिकारजतं यथा । याव
न्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयं ॥
॥७॥ सच्चिदात्मन्यनुस्यूते नित्य

दर्शनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

विष्णौ प्रकल्पिताः। व्यक्तयो विवि धाःसर्वा हाटके कटकादिवत् ॥८॥ यथाकाशो हृषीकेशो नानोपाधिग तो विभुः। तद्भेदाद्भिन्नवद्भाति तन्नाशे सति केवलः ॥९॥ नानोपा धिवशादेव जातिवर्णाश्रमादयः। आत्मन्यारोपितस्तोये रसवर्णादि भेदवत् ॥१०॥ पञ्चीकृतमहाभूत संभवंकर्मसंचितं।शरीरं सुखदुःखा नां भोगायतनमुच्यते ॥११॥ पंच प्राणमनोबुद्धिदशेन्द्रियसमन्वितं। अपंचीकृत भूतोत्थं सूक्ष्माङ्गंभोग

साधनं ॥१२॥ अनाद्यविद्याऽनिर्वा
च्याकारणोपाधिरुच्यते । उपाधित्रि
तयादन्य मात्मानमवधारयेत् १३
पंचकोशावियोगेन तत्तंमयइवस्थि
तः । शुद्धात्मानीलवस्त्रादियोगेन
स्फटिकोयथा १४ वपुस्तुषादिभिः
कोशैर्युक्तंयुक्त्याऽवघातकः । आ
त्मानमन्तरं शुद्धं विविच्यात्तन्दु
लं यथा ॥ १५ ॥ सदा सर्वगतो
प्यात्मा न सर्वत्रावभासते । बुद्धावे
वावभासेत स्वच्छेषु प्रतिबिम्बवत्
॥१६॥ देहेन्द्रियमनोबुद्धि प्रकृति

देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य·

भ्योविलक्षणं । तद्वृत्तिसाक्षिणंवि
द्यादात्मानंराजवत्सदा॥१७॥व्या
पृतेष्विन्द्रियेष्वात्मा व्यापारीवावि
वेकिनाम् । दृश्यतेऽभ्रेषुधावत्सु धा
वन्निव यथा शशी ॥१८॥ आत्मचै
तन्यमाश्रित्य देहेन्द्रियमनोधियः
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं य
थाजनः ॥१९॥ देहेन्द्रियगुणान्क
र्माण्यमले सच्चिदात्मनि । अध्यस्य
न्त्यविवेकेन गगने नीलतादिवत् ॥
॥२०॥ अज्ञानान्मानसोपाधेः कर्तृ
त्वादीनिचात्मनि । कल्प्यन्तेऽम्बु

गतेचन्द्रे चलनादि जथाम्भसः २१
रागेच्छासुखदुःखादिबुद्धौ सत्यां प्र
वर्तते । सुषुप्तौ नास्ति तन्नाशे त
स्माद्बुद्धेस्तु नात्मनः ॥२२॥ प्रका
शोऽर्कस्य तोयस्य शैत्यमग्नेर्यथो
ष्णता।स्वभावःसच्चिदानन्दनित्य
निर्मलतात्मनः ॥२३॥ आत्मनःस
च्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयं । सं
योज्यचाविवेकेन जानामीतिप्रवर्त
ते ॥२४॥ आत्मनोविक्रियानास्ति
बुद्धेर्बोधो नजात्विति । जीवःसर्वम
लं ज्ञात्वा कर्तादृष्टेति मुह्यति २५॥

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् । नाहं जीवः परात्मेति ज्ञातं चेन्निर्भयो भवेत् ॥२६॥ आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि । दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥२७॥ स्वबोधेनान्यबोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशते ॥२८॥ निषिद्ध्य निखिलोपाधीन्नेति नेतीति वाक्यतः । विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥२९॥ आविद्यकं शरीरादि द

द्ययं बुद्बुदवत्क्षरं । एतद्विलक्षणंवि
द्या दहंब्रह्मेति निर्मलं ॥३०॥ देहा
न्यत्वान्न मे जन्म जराकार्श्यलया
दयः । शब्दादिविषयैःसंगोनिरिंद्रि
यतया न च ॥३१॥ अमनस्त्वान्न
मे दुःखरागद्वेषभयादयः । अप्राणो
ह्यमनाःशुभ्र इत्यादि श्रुतिशासना
त् ॥३२॥ निर्गुणोनिष्क्रियो नित्यो
निर्विकल्पो निरंजनः । निर्विकारो
निराकारो नित्यमुक्तोऽस्मि निर्म
लः ॥३३॥ अहमाकाशवत्सर्वबहि
रंतर्गतोच्युतः । सदा सर्वसमःशुद्धो

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

निःसंगो निर्मलोऽचलः ॥ ३४ ॥ नित्यशुद्धविमुक्तैकमखंडानंदमद्वयं । सत्यं ज्ञानमनंतं यत्परं ब्रह्माहमेव तत् ॥३५॥ एवं निरंतराभ्यस्ता ब्रह्मैवास्मीति वासना । हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥३६॥ विविक्तदेश आसीनो विरागो विजितेन्द्रियः । भावयेदेकमात्मानं तमनन्तमनन्यधीः ३७॥ आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥३८॥ रूपव

र्णादिकं सर्वं विहाय परमार्थवित् । परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥३९॥ ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते । चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥४०॥ एवमात्मारणौ ध्यानमन्थने सततं कृते । उदितावगतिर्ज्वाला सर्वाऽज्ञानेन्धनं दहेत् ॥४१॥ अरुणेनैव बोधेन पूर्वं सन्तमसे हृते । तत आविर्भवेदात्मा स्वयमेवांशुमानिव ४२ आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया तन्नाशे प्राप्तवद्भाति स्वकण्ठाभर

णं यथा ॥४३॥ स्थाणौ पुरुषवद्भ्रान्त्या
कृता ब्रह्मणि जीवता । जीवस्य ता
त्विके रूपे तस्मिन्दृष्टे निवर्तते ॥४४॥
तत्वस्य रूपानुभवादुत्पन्नं ज्ञानम
ञ्जसा ॥ अहं ममेति चाज्ञानं बाध
ते दिग्भ्रमादिवत् ॥४५॥ सम्यग्वि
ज्ञानवान् योगी स्वात्मन्येवा खिलं
स्थितं । एवं च सर्वमात्मानमीक्षते
ज्ञानचक्षुषा ॥४६॥ आत्मैवेदं जग
त्सर्वमात्मन्योऽन्यन्न विद्यते ॥ मृ
दो यद्वद्घटादीन्स्वात्मानं सर्वमी
क्षते ॥४७॥ जीवन्मुक्तस्तु तद्विद्व

न्पूर्वोपाधिगुणांस्त्यजेत् ॥ सच्चिदा
नन्दरूपत्वाद्भवेद् भ्रमरकीटवत् ॥
॥ ४८ तीर्त्वा मोहार्णवं हत्वा राग
द्वेषादिराक्षसान् ॥ योगी शान्तिस
मायुक्तोत्यात्मारामो विराजते ४९
उपाधिस्थोऽपि तद्धर्मैर्नलिप्तोव्यो
मवन्मुनिः ॥ सर्वविन्मूढवत्तिष्ठेद
सक्तो वायुवच्चरेत् ॥५०॥ बात्यां
नित्यसुखासक्तिं हित्वात्मसुखनि
र्वृतः । घटस्थदीपवत् स्वच्छःस्वांत
रेव प्रकाशते ॥५१॥ उपाधिविलया
द्विष्णौ निर्विशेषं विशन्मुनिः । ज

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

लेजलं वियद्व्योम्नि तेजस्तेजसि
वा यथा ॥ ५२ ॥ यल्लाभान्नापरो
लाभो यत्सुखान्न परं सुखं । यज्ज्ञा
नान्नापरंज्ञानंतद्ब्रह्मेत्यवधारयेत्
॥५३॥ यद्दृष्ट्वान परं दृश्यं यद्
भूत्वा न पुनर्भवः । यज्ज्ञात्वा नप
रं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥५४॥
तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दम
व्ययं । अनन्तं नित्यमेकं यतद्ब्र
ह्मेत्यवधारयेत् ॥५५॥अतद्व्यावृ
त्तिरूपेण वेदान्तैर्लक्ष्यतेऽव्ययं । अ
खण्डानन्दमेकं यतद्ब्रह्मेत्यवधारये

त् ॥५६॥ अखण्डानन्दरूपस्य त
स्यानन्दलवाश्रिताः । ब्रह्माद्यास्ता
रतम्येन भवंत्यानन्दिनोऽखिलाः॥
॥५७॥ तद्युक्तमखिलं वस्तु व्यवहा
रस्तदान्वितः । तस्मात्सर्वगतंब्रह्म
क्षीरे सर्पिरिवाखिले ॥५८॥ अनण्व
स्थूलमह्रस्वमदीर्घमजमव्ययम् ॥
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधा
रयेत् ॥५९॥ यद्भासाभासतेऽर्का
दिर्भास्यैर्यत्तु न भास्यते । येन स
र्वमिदं भातितद्ब्रह्मेत्यवधारयेत् ॥
॥६०॥ स्वयमन्तर्बहिर्व्याप्य भास

यत्राखिलं जगत् । ब्रह्म प्रकाशते वह्नि प्रतप्तायसपिण्डवत् ॥६१॥ जगद्वि लक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किञ्चन । ब्रह्मान्यद्भाति चेन्मिथ्या यथा म रुमरीचिका ॥६२॥ दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् । तत्व ज्ञानाच्च तद्ब्रह्म सच्चिदानन्दम द्वयं ॥६३॥ सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते । अज्ञानचक्षुर्नेक्षे त भास्वन्तं भानुमन्धवत् ॥६४॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरि तापितः । जीवः सर्वमलान्मुक्तः स्व

णवद्द्योतते स्वयं ६५ हृदाकाशोदि
तो ह्यात्माबोधभानुस्तमोपहृत्। स
र्वव्यापी सर्वधारी भाति सर्वं प्रकाश
ते ॥६६॥ दिग्देशकालाद्यनपेक्ष्य स
र्वगं शीतादिहृन्नित्यसुखं निरञ्जनं
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ६७
इति श्रीमत्परमहंसपरिब्राजकाचा
र्य श्रीमच्छङ्कराचार्यकृत आत्मबो
धः समाप्तः ॥१०७॥

अथ साधनपंचकप्रारम्भः ।

श्रीगणेशाय नमः ॥ वेदो नित्य

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

मधीयतांतदुदितं कर्मस्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः का
म्ये मतिस्त्यज्यतां । पापौघः परि
धूयतां भवसुखे दोषोनुसन्धीयता
मात्मेच्छा व्यवसीयतां निजगृहा
त्तूर्णं विनिर्गम्यतां ॥१॥ सङ्गःसत्सु
विधीयतां भगवतो भक्तिर्दृढा धीय
तां शान्त्यादिः परिचीयतां दृढतरं
कर्माशु सन्त्यज्यतां । सद्विद्वानु
पसर्पतां प्रतिदिनं तत्पादुके सेव्य
तां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवा
क्यं समाकर्ण्यतां ॥२॥ वाक्यार्थ

श्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां दुस्तर्कात्सु विरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् । ब्रह्मैवास्मि विभाव्यतामहरहो गर्वः परित्यज्यतां देहेऽहंमतिरुज्झतां बुधजनैर्वादः परित्यज्यताम् ।३।क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यतां । शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतामौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृ

तत्र भवदासर...

देषां दुर्जनसंमते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

ज्यतां ४ एकान्ते सुखमास्यतां प
रतरे चेतःसमाधीयतां पूर्णात्मा सु
समीक्ष्यतां जगदिदं तद्बाधितं दृश्य
तां। प्राकर्मप्रविलाप्यतां चितिबला
न्नाप्युतरैःश्लिष्यतां प्रारब्धं त्विह
भुज्यतामथ परब्रह्मात्मना स्थीय
तां ॥५॥ यः श्लोकपञ्चकमिदं पठते
मनुष्यो सञ्चिंतयत्यनुदिनं स्थिर
तामुपेत्य। तस्याशु संसृतिदवान
लतीव्रघोरतापः प्रशान्तिमुपयाति
चितिप्रसादात् ॥६॥ इति श्रीमच्छ
ङ्कराचार्यविरचितं साधनपञ्चकं स

म्पूर्णं ।

अथात्मषट्कस्तोत्रप्रारम्भः ।

श्रीगणेशाय नमः । मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योमभूमी न तेजो न वायु श्चिदानन्दरूपः शिवोहं शिवोहं ॥१॥ अहंप्राणवर्गो न पंचानिला मे न तोयं नमे धातवो नैव कोशाः । न वाक् पाणिपादौ न चोपस्थपायू श्चिदानन्दरूपः शिवोहं शि० ॥२॥ न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावं

न धर्मो न चार्थो न कामो न मोक्ष
श्चिदानन्दरूपःशिवोहं शि० ॥३॥
न पुण्यं न पापं न सौख्यं न दुःखं न
मन्त्रो न तीर्थं न वेदा न यज्ञाः । अ
हं भोजनं नैव भोज्यं न भोक्ता चिदा
नन्दरूपः शिवोहं शि० ॥४॥ न मे
मृत्युशंका न मे जातिभेदःपिता नैव
मे नैव माता न जन्म । न बन्धुर्न मि
त्रं गुरुर्नैव शिष्यश्चिदानन्दरूपः
शिवोहं शि० ॥५॥ अहं निर्विकल्पो
निराकाररूपो विभुर्व्याप्य सर्वत्र स
र्वेन्द्रियाणि। सदा मे समत्वं न मु

क्तिर्न बन्धश्चिदानन्दरूपः शिवोहं शिवोहं ॥६॥ इति श्रीमच्छंकराचार्यविरचितमात्मषट्कस्तोत्रं सं० ।

अथ सिद्धान्तबिन्दुप्रारम्भः ।

श्रीगणेशाय नमः । न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः । अनेकान्तिकत्वात्सुषुप्तैकसिद्धस्तदेकोवशिष्टः शिवः केवलोहं ॥१॥ न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोपि । अनात्माश्रयोहं ममाध्यासहानात्तदेको० ॥२॥ न माता पिता

वान देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति । सुषुप्तौ निरस्ता तिशून्यात्मकत्वा त्तदेको० ॥ ३ ॥ न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा । विशिष्टानुभूत्या विशुद्धात्मकत्वा त्तदेको० ॥४॥ न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वा परा दिक् । वियद्व्यापकत्वादखण्डैकरूपस्तदेको० ॥५॥ न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घं । अरूपं तथा ज्यो

तिराकारकत्वात्तदेको० ॥६॥ न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः । स्वरूपावबोधो विकल्पासहिष्णुस्तदेको० ॥७॥ न जाग्रन्नमेस्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा । अविद्यात्मकत्वात्त्रयाणां तुरीयस्तदेको० ॥८॥ अपि व्यापकत्वाद्धितत्त्वप्रयोगात्स्वतः सिद्धभावादनन्याश्रयत्वात् । जगत्तुच्छमेतत्समस्तं तदन्यत्तदेको० ॥९॥ नचैकं तदन्यद्द्वितीयं कुतः स्या

न वा केवलत्वं न चाकेवलत्वं । न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदांतसिद्धं ब्रवीमि ॥१०॥ इति श्रीमच्छंकराचार्यविरचितः सिद्धान्तबिन्दुःसम्पूर्णं ।

अथ मनीषापंचकप्रारम्भः ।

श्रीगणेशाय नमः ॥ सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकं । काशीक्षेत्रं प्रतिसहगौर्या मार्गे तु शङ्करं ॥१॥ अन्त्यवेषधरं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् । शंकरः सोपि चाण्डालस्तं पुनः प्राह शंकरं ॥२॥

अन्नमयादन्नमय मथवा चैतन्य
मेव चैतन्यात्। द्विजवर दूरीकर्तुं
वाञ्छसि किं ब्रूहि गच्छ गच्छेति ३
किंगंगाम्बुनि बिम्बितेऽम्बरमणौ चा
ण्डालवाटीपयः पूरे चान्तरमस्ति
काञ्चनघटीमृत्कुम्भयोर्वाम्बरे। प्र
त्यग्वस्तुनि निस्तरंगसहजानन्दाव
बोधाम्बुधौ विप्रोयं श्वपचोयमित्य
पि महान् कोऽयं विभेदभ्रमः ॥४॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या
संविदुज्जृंभते या ब्रह्मादिपिपीलि
कान्ततनुषु प्रोता जगत्साक्षिणी। सै

भवदादिग्रन्द्ररचित ...
... दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा ...

नाहं न चदृश्यवस्त्विति दृढप्रज्ञापि
यस्यास्ति चेच्चाण्डालोस्तु स तु द्वि
जोस्तु गुरुरित्येषा मनीषा मम५॥
ब्रह्मैवाहमिदं जगच्च सकलं चिन्मा
त्रविस्तारितं सर्वं चैतदविद्यया त्रि
गुणया शेषं मया कल्पितं । इत्थंय
स्य दृढा मतिः सुखतरे नित्ये परे
निर्मले चाण्डालोस्तु सतु० ॥ ६ ॥
शश्वन्नश्वरमेव विश्वमखिलं नि
श्चित्य वाचा गुरोर्नित्यंब्रह्मनिरन्त
रं विमृशता निर्व्याजशान्तात्मना।
भूतं भावि च दुष्कृतं प्रदहता संवि

न्मये पावके प्रारब्धाय समर्पितंस्व
वपुरित्येषा मनीषा मम ॥७॥ या
तिर्यङ्नरदेवता भिरह मित्यन्तः
स्फुटा गृह्यते यद्भासा हृदयाक्षदेह
विषया भान्ति स्वतोऽचेतनाः। तां
भास्यैः पिहितार्कमण्डलनिभां स्फू
र्तिं सदा भावयन्योगी निर्वृतमान
सो हि गुरुरित्येषा मनीषा मम८॥
यत्सौख्याम्बुधिलेशलेशत इमे श
क्रादयोनिर्वृता यश्चित्ते नितरां प्र
शान्तकलने लब्ध्वा मुनिर्निर्वृतः।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्र

तत्र भवदादि [illegible]

[illegible] दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

त्यैव न ब्रह्मविद्यः कश्चित्स सुरेन्द्र वन्दितपदो नूनं मनीषा मम ॥९॥
इति मनीषा पंचकं सम्पूर्णं ॥

अथ वाक्यवृत्तिप्रारंभः ।

श्रीगणेशाय नमः ॥ सर्गस्थिति प्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिं । निर्मुक्त बन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥१॥ यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च । इत्थं विजानामि सदात्मरूपं तस्याङ्घ्रिपद्मं प्रण

तोऽस्मि नित्यं ॥२॥ तापत्रयार्कसन्तप्तः कश्चिदुद्विग्नमानसः । शमादिसाधनैर्युक्तःसद्गुरुं परिपृच्छति ॥३॥ अनायासेन येनास्मान्मुच्येयं भवबन्धनात् । तन्मे संक्षिप्य भगवन्कैवल्यं कृपया वद॥४॥ साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते । इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥५॥ तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनं ॥६॥ को जीवः कःपरश्चा

दे॰ा दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

त्मातादात्म्यं वा कथं तयोः। तत्त्व मस्यादिवाक्यं वा कथं तत् प्रतिपादयेत् ॥७॥ अत्रब्रूमः समाधानं को न्यो जीवस्त्वमेव हि। यस्त्वं पृच्छसि मां कोहं ब्रह्मैवासि न संशयः ॥८॥ पदार्थमेव जानामि नाद्यापि भगवन् स्फुटं। अहं ब्रह्मेति वाक्यार्थप्रतिपद्ये कथं वद ॥९॥ सत्यमाह भवानत्र विगानं नैव विद्यते। हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १० ॥ अन्तःकरणतद्वृत्ति साक्षी चैतन्यविग्रहः। आनन्दरू

पः सत्यः सन् किंनात्मानं प्रपद्यसे ॥११॥ सत्यानन्दस्वरूपं धीसाक्षिणं बोधविग्रहं । चिन्तयात्मतया नित्यं त्यक्त्वा देहादिगां धियं ॥१२॥ रूपादिमान्यतःपिण्डस्ततो नात्मा घटादिवत् । वियदादिमहाभूतविकारत्वाच्च कुम्भवत् ॥१३॥ अनात्मा यदि पिण्डोयमुक्तहेतुर्बलान्मतः । करामलकवत्साक्षादात्मानं प्रतिपादय ॥१४॥ घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा । देहद्रष्टा तथा देहो नाहमित्यवधारय

रेपी दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

॥१५॥ एवमिन्द्रियदृङ्नाहमिन्द्रि
याणीति निश्चिनु । मनोबुद्धिस्तथा
प्राणो नाहमित्यवधारय ॥१६॥ सं
घातोऽपि तथा नाहमिति दृश्यविल
क्षणं । द्रष्टारमनुमानेन निपुणं संप्र
धारय ॥१७॥ देहेन्द्रियादयो भावा
हानादिव्यापृतिक्षमाः । यस्य सान्नि
धिमात्रेण सोहमित्यवधारय १८॥
अनापन्नविकारः सन्नयस्कान्तव
देव यः । बुद्ध्यादींश्चालयेत्प्रत्यक्
सोहमित्यवधारय ॥१९॥ अजडा
त्मवदाभान्ति यत्सान्निध्याज्जडा

अपि । देहेन्द्रियमनःप्राणाःसोहमि
त्यवधारय ॥२०॥ अगमन्मे मनोऽ
न्यत्र सांप्रतं च स्थिरीकृतं । एवं यो
वेत्ति धीवृत्तिं सोहमित्यवधारय२१
स्वप्नजागरिते सुप्ति भावाभावौधि
यां तथा । यो वेत्यविक्रियः साक्षात्
सोहमित्यवधारय ॥२२॥ घटावभा
सको दीपो घटादन्यो यथेष्यते । दे
हावभासको देही तथाहंबोधविग्रहः
॥२३॥ पुत्रवित्तादयोभावा यस्य शे
षतया प्रियाः । द्रष्टासर्वप्रियतमः
सोहमित्यवधारय ॥२४॥ परप्रेमा

देवी दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

स्पदतया मानभूतमहं सदा। भूया समिति यो द्रष्टा सोहमित्यवधारय ॥२५॥ यःसाक्षिलक्षणो बोधस्त्वंपदार्थःस उच्यते। साक्षित्वमपिबोद्धृत्वमविकारितयाऽऽत्मनः २६॥ देहेन्द्रियमनःप्राणा हंकृतिभ्यो विलक्षणः। प्रोज्झिताशेषषड्भाव विकारस्त्वंपदाभिधः ॥२७॥ त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ १८ ॥ निरस्ताशेषसंसार दोषोऽस्थूलादिलक्षणः।अदृश्यत्वा

द्विगुणकः पराकृततमोमलः ॥२९॥
निरस्तातिशयानन्दः सत्यप्रज्ञान
विग्रहः । सत्तास्वलक्षणः पूर्णः परमा
त्मेति गीयते ॥३०॥ सर्वज्ञत्वं परेश
त्वं तथा संपूर्णशक्तिता । वेदैः सम
र्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥३१॥
यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रति
पादितं । मृदाद्यनेकदृष्टान्तैस्तद्ब्र
ह्मेत्यवधारय ॥३२॥ यदानन्त्यं प्र
तिज्ञाय श्रुतिस्तत्सिद्धये जगौ । त
त्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधार
य ॥३३॥ विजिज्ञास्यतया यच्च वे

दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा कविद्य-

दान्तैषु मुमुक्षुभिः । समर्थ्यतेतिय त्नेन तद्ब्रह्मेत्यवधारय ॥३४॥ जीवात्मना प्रवेशश्च नियन्तृत्वं च ता न्यति । श्रूयते यस्य वेदेषु तद्ब्रह्मेत्य वधारय ॥३५॥कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ । जीवानां हेतुक र्तृत्वं तद्ब्रह्मेत्यवधारय ॥३६॥तत्त्वं पदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्य तेऽधुना । तादात्म्यमत्र वाक्यार्थ स्तयोरेव पदार्थयोः ॥३७॥ संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संम तः । अखण्डैकरसत्वेन वाक्यार्थो

विदुषां मतः ॥३८॥ प्रत्यग्बोधोय
आभाति सोऽद्वयानन्दलक्षणः । अ
द्वयानन्दरूपश्च प्रत्यग्बोधैकलक्ष
णः ॥३९॥ इत्थमन्योन्यतादात्म्य
प्रतिपत्तिर्यदा भवेत् । अब्रह्मत्वं त्व
मर्थस्य व्यावर्तेत तदैव हि ॥४० त
दर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृ
णु । पूर्णानन्दैकरूपेण प्रत्यग्बोधो
वतिष्ठते ॥ ४१ ॥ तत्त्वमस्यादिवा
क्यं च तादात्म्यप्रतिपादने । लक्ष्यौ
तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥
॥४२॥ हित्वा द्वौ शबलौ वाच्यौ वा

देशे दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा त्वविद्य-

कथं वाक्यार्थबोधने । यथा प्रवर्तते ऽस्माभिस्तथा व्याख्यातमादरात् ॥४३॥ आलम्बनतयाभाति योस्मत्प्रत्ययशब्दयोः । अन्तः करणसंभिन्नबोधःस त्वंपदाभिधः ॥४४॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः । पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥४५॥ प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता । विरुध्यते यतस्माल्लक्षणा संप्रवर्तते ॥४६॥मानान्तरविरोधेतु मुख्यार्थस्य परिग्रहे । मुख्यार्थेनाविनाभू

ते प्रतीतिर्लक्षणोच्यते ॥४७॥ तत्त्वमस्यादिवाक्येषु लक्षणाभागलक्षणा । सोहमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥ अहंब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् । शमादिसहितस्तावदभ्यसेच्छ्रवणादिकं ४९ श्रुत्याचार्यप्रसादेद्दृढोबोधोयदाभवेत् । निरस्ताशेषसंसारनिदानःपुरुषस्तदा ५० विशीर्णकार्यकरणोभूतसूक्ष्मैरनावृतः । विमुक्तकर्मनिगडःसद्यएवविमुच्यतेप्रारब्धकर्मवेगनेजीवन्मुक्तो यदाभवेत् । किं

स्थितकालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२ ॥ निरस्तातिशयानन्दं वैष्णवं परमं पदं । पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥५३॥ इति श्रीमत् परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचिता वाक्यवृत्तिः समाप्तः ॥

अथ परापूजा प्रारभ्यते ।

श्रीगणेशाय नमः ॥ पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनं । स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥१॥ निर्मलस्य कुतः स्नान

वस्त्रं विश्वोदरस्यच ॥ निरालम्ब
स्योपवीतंपुष्पंनिर्वासनस्यच ॥२॥
निर्लेपस्य कुतोगन्धो रम्यस्याभर
णंकतः ॥ नित्यतृप्तस्य नैवेद्यं ता
म्बूलंच कुतोविभोः ॥३॥ प्रदक्षिणा
ह्यनन्तस्य ह्यद्वयस्य कुतोनतिः ॥
वेदवाक्यैरवेद्यस्य कुतस्तोत्रं विधी
यते ॥४॥ स्वयंप्रकाशमानस्य कु
तो नीराजनंविभोः ॥ अंतर्बहिश्च
पूर्णस्य कथमुद्वासनं भवेत् ॥५॥
एवमेव परापूजा सर्वावस्थासु सर्व
दा ॥ एतद्बुध्यातु देवेश विधयात्र

दुर्जनसंघाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

ह्मवित्तमैः ॥६॥ इतिपरा० ॥

॥ अथ हरिहरात्मकस्तोत्रप्रारंभः ॥

श्रीगणेशायनमः । गोविंदमाध वमुकुन्द हरे मुरारे शम्भो शिवेश शशिशेखर शूलपाणे । दामोदरा च्युत जनार्दनवासुदेव त्याज्या भ टाय इतिसन्ततमामनन्ति ॥ १ ॥ गंगाधरांधकरिपोहर नीलकंठ वैकुं ठकैटभरिपो कमठाब्जपाणे । भूते शखण्डपरशो मृड चण्डिकेश त्या ज्या० ॥२॥ विष्णोनृसिंह मधुसूद नचक्रपाणे गौरीपते गिरिश शंकर

चन्द्रचूड । नारायणासुर निवर्हण
शार्ङ्गपाणे० ॥३॥ मृत्युंजयोग्र विष
मेक्षणकामशत्रो श्रीकान्तपीतवस
नाम्बुदनीलशौरे । ईशानकृत्तिवस
नत्रिदशैकनाथ० ॥ ४ ॥ लक्ष्मीपते
मधुरिपो पुरुषोत्तमाद्य श्रीकंठदि
ग्वसन शान्त पिनाकपाणे । आन
न्दकन्दधरणीधर पद्मनाभ० ॥५॥
सर्वेश्वर त्रिपुरसूदनदेवदेवब्रह्मण्य
देव गरुडध्वज शंखपाणे । त्र्यक्षोर
गाभरण बालमृगांक मौले० ॥६॥
श्रीरामराघव रमेश्वररावणारे भूते

रणे दुर्जनसंमाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

शमन्मथरिपो प्रमथाधिनाथ । चा
णूरमर्दन हृषीकपते मुरारे० ॥७॥
शूलिन्गिरीश रजनीशकलावतंस
कंसप्रणाशन सनातनकेशिनाश ।
भर्गत्रिनेत्र भवभूतपते पुरारे०॥८॥
गोपीपतेयदुपते वसुदेवसूनो कर्पूर
गौर वृषभध्वज भालनेत्र । गोवर्ध
नोद्धरण धर्मधुरीणगोप०॥९॥ स्था
णोत्रिलोचन पिनाकधरस्मरारे कृ
ष्णानिरुद्ध कमलाकरकल्मषारे ।
विश्वेश्वर त्रिपथगार्द्रजटाकलाप०
॥१०॥ अष्टोत्तराधिक शतेन सुचा

स्नाम्नां सन्दर्भितां ललितरत्नकदम्बकेन । सन्नायकां दृढगुणां निजकंठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ॥११॥ गणावूचतुः । इत्थं द्विजेन्द्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः । अन्येऽपि ये हरिहराङ्कधराधरायां ते दूरतः पुनरहो परिवर्जनीयाः ॥१२॥ अगस्त्य उवाच ॥ यो धर्मराजरचितां ललितप्रबन्धां नामावलिं सकलकल्मषबीजहन्त्रीं । धीरोऽत्र कौस्तुभभृतः शशिभूषण

रेषु दुर्जनसंपाते गुरोः परिवादः संभूतदोषानुकथनं निन्दा अविद्य-

स्य नित्यं जपेत्तु स्तनरसं न पिबेत्स मातुः ॥ १३ ॥ इति शृण्वन्कथां रम्यां शिवशर्मा प्रियेऽनघां । प्रहर्षवक्त्रः पुरतो ददर्शाप्सरसां पुरीं ॥ १४ ॥ इति श्रीस्कन्दपुराणे काशीखण्डे धर्मराजविरचिताहरिहराष्टोत्तरशतनामावलिःसमाप्ता ॥

अथ शिवरामाष्टकप्रारम्भः ।

श्रीगणेशाय नमः ॥ शिव हरे शिवरामसखे प्रभो त्रिविधतापनिवारण हे विभो । अज जनेश्वर यादव पाहि मां शिव हरे विजयं कुरु

मे वरं ॥१॥ कमललोचनरामदया
निधे हरगुरो गजरक्षक गोपते । शि
वतनो भवशंकर पाहिमां शिव हरे
वि० ॥२॥ स्वजनरञ्जनमंगलमन्दि
रं भजति ते पुरुषाः परमं पदं । भ
वति यस्य सुखं परमद्भुतं शिवह०
॥ ३ ॥ जय युधिष्ठिरवल्लभ भूपते
जय जयार्जित पुण्यपयोनिधे । ज
य कृपामय कृष्ण नमोस्तुते शिव
हरे विज० ॥४॥ भवविमोचन मा
धव मापते सुकविमानसहंसशिवा
रते । जनकजारत राघव रक्षमां शि

व ह० ॥५॥ अवनिमण्डलमङ्गल मापते जलदसुन्दरराम रमापते । निगमकीर्तिगुणार्णव गोपते शिव ह० ॥६॥ पतितपावन नाममयीलता तवयशो विमलं परिगीयते । तदपि माधवमां किमुपेक्षसे शिव ह० ७॥ अमरतापरदेवरमापते विजयतस्तव नामघनोपमा । मयि कथं करुणार्णव जायते शि० ॥८॥ हनुमतः प्रिय चापकर प्रभो सुरसरिद्धृतशेखर हे गुरो । मम विभो किमु विस्मरणं कृतं शि० ॥९॥ नरहरे रतिरञ्ज

नसुन्दरं पठति यः शिवरामकृतस्तवम् । विशति रामरमाचरणाम्बुजे शि० ॥ १० ॥ प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः । विजयो जायते तस्य विष्णुमाराध्यमाप्नुयात् ॥११॥ इतिश्रीरामानन्दविरचितं शिवरामस्तोत्रं सम्पूर्णं ।

अथ शंकराचार्यकृतगुर्वष्टकप्रारम्भः ।

श्रीगणेशाय नमः । शरीरं सुरूपं तथा वा कलत्रं यशश्चारुचित्रं धनं मेरुतुल्यम् । मनश्चेन्न लग्नं हरेरंघ्रिपद्मे ततः किं ततः किं ततः किं

ततः किम् ॥१॥ कलत्रं धनं पुत्रपौ
त्रादिसर्वं गृहे बान्धवाः सर्वमेतद्धि
जातं। गुरोरंघ्रिपद्मे मनश्चेन्नलग्नं
त० ॥२॥ षडङ्गादिवेदो मुखे शास्त्र
विद्या कवित्वादि गद्यं सुपद्यं करो
ति। गु० ॥३॥ विदेशेषु मान्यः स्व
देशेषु धन्यः सदाचारवृत्तेषु मत्तो
न चान्यः ॥ गु० ॥४॥ क्षमामण्डले
भूपभूपालवृन्दैः सदा सेवितं यस्य
पादारविंदं ॥ गु०॥५॥ यशो मे गतं
दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे
यत्प्रसादात्॥ गु०६॥ न भोगे न यो

नसुन्दरं पठति यः शिवरामकृतस्तवम् । विशति रामरमाचरणाम्बुजे शि० ॥ १० ॥ प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः । विजयी जायते तस्य विष्णुमाराध्यमाप्नुयात् ॥११॥ इतिश्रीरामानन्दविरचितं शिवरामस्तोत्रं सम्पूर्णं ।

अथ शंकराचार्यकृतगुर्वष्टकप्रारम्भः ।

श्रीगणेशाय नमः । शरीरं सुरूपं तथा वा कलत्रं यशश्चारुचित्रं धनं मेरुतुल्यम् । मनश्चेन्न लग्नं हरेरंघ्रिपद्मे ततः किं ततः किं ततः किं

ततः किम् ॥१॥ कलत्रं धनं पुत्रपौ
त्रादिसर्वं गृहे बान्धवाः सर्वमेतद्धि
जातं । गुरोरंघ्रिपद्मे मनश्चेन्नलग्नं
त० ॥२॥ षडङ्गादिवेदो मुखे शास्त्र
विद्या कवित्वादि गद्यं सुपद्यं करो
ति । गु० ॥३॥ विदेशेषु मान्यः स्व
देशेषु धन्यः सदाचारवृत्तेषु मत्तो
न चान्यः ॥ गु० ॥४॥ क्षमामण्डले
भूपभूपालवृन्दैः सदा सेवितं यस्य
पादारविंदं ॥ गु०॥५॥ यशो मे गतं
दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे
यत्प्रसादात्॥ गु०६॥ न भोगे न यो

गे न वा वाजिराजौ न कान्तामुखे नै
व वित्तेषु चित्तं ॥गु० ॥७॥ अरण्ये
न वा स्वस्य गेहे न कार्ये नदेहे मनो
वर्तते मे त्वनर्घ्ये ॥गु० ॥८॥ अनर्घ्या
णि रत्नानि भुक्तानि सम्यक्समालिं
गिता कामिनी यामिनीषु ॥गु० ॥
॥९॥ गुरोरष्टकं यः पठेत्पुण्यदेही य
तिर्भूपतिर्ब्रह्मचारी च गेही । लभे
द्वाञ्छितार्थं पदं ब्रह्मसंज्ञं गुरोरुक्त
वाक्ये मनो यस्य लग्ने ॥१०॥ श्री
मत्परमहंसपरिव्राजकाचार्य श्रीम
च्छंकराचार्यविरचितं गुरोरष्टकं

समाप्तम् ।

अथ प्रश्नोत्तरमालिका प्रारंभः ।

श्रीगणेशाय नमः । कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान् । अनया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया ॥१॥ भगवन् किमुपादेयं गुरुवचनं हेयमपि च किमकार्यं । को गुरुरधिगततत्त्वः शिष्यहितायोद्यतः सततं ॥२॥ त्वरितं किं कर्तव्यं सुधिया संसारसंततिच्छेदः । किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासहितं ॥३॥ कः पथ्यतरो ध

मः कः शुचिरिह यस्य मानसं शुद्धं । कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु ॥४॥ किं संसारे सारं बहुशो विचिन्त्य मानमिदमेव । मनुजेषु दृष्टतत्त्वं स्वपरहितायोद्यतं जन्म ॥५॥ मदिरेव मोहजनकः कः स्नेहः के च दस्यवो विषयाः । का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः ॥६॥ कस्माद्भयमिह मरणादन्धादपि को विशिष्यते रोगी । कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥७॥ पातुं कर्णाञ्जलिभिः कि

ममृतमिव युज्यते सदुपदेशः । किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥८॥ किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन । किं दारिद्र्यमतोषः किं लाघवमन्यधनपरायाञ्चा ॥९॥ किं जीवितमनवद्यं किं जाड्यं पाटवेप्यनभ्यासः । को जागर्ति विवेकी का निद्रा मूढता जन्तोः ॥१०॥ नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः । के शशधरकरनिकरानुकारिणः सज्जना एव ॥ ११ ॥ को नरकः परवशता

किं सौख्यं सर्वसंगविरतिर्या । किं साध्यं भूतहितं किमु प्रियं प्राणिनामसवः ॥ १२ ॥ किं दानमनाकांक्षं किं मित्रं यन्निवर्तयति पापात् ॥१३॥ कोऽलंकारः शीलं किं वाचां मण्डनं सत्यं । किमनर्थफलं मानः सुसंगतिः का सुखावहा मैत्री ॥१४॥ सर्वव्यसनविनाशे को दक्षः सर्वथा परित्यागी । कोऽन्धो योऽकार्यरतः कोवधिरोयः शृणोतिन हितानि १५ को मूको यः काले प्रियाणि वक्तुं नजानाति । किं मरणं मूर्खत्वं कि

मनर्घ्यं दत्तमवसरे यच्च ॥१६॥ आ
मरणान्तिक शल्यं प्रच्छन्नं यत्कृतं
पापं। कुत्र विधेयो यत्नो विद्याभ्या
से सदौषधे दाने ॥१७॥ अवधीर
णा क्व कार्या खलपरयोषित्परधने
षु। काऽहर्निशमनुचिंत्या संसारासा
रता न तु प्रमदा ॥१८॥ का प्रेयसी
विधेया करुणा दीनेषु सज्जने मैत्री
कण्ठगतैरप्यसुभिः कस्यात्मान व
शमुपयाति ॥ १९ ॥ मूर्खस्य विषा
दवतो गर्ववतोऽपिच कृतघ्नस्य। कः
पूज्यः सद्वृत्तः कमधममाचक्षतेच

लितवृत्तं ॥२०॥ केन जितं जगदेतत्सत्यतितिक्षावता पुंसा ॥ कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्यां ॥२१॥ कस्मै नमस्क्रिया स्याद्देवानामपि दयाप्रधानस्य। कस्मादुद्वेजितव्यं संसारारण्यतः सुधिया ॥२२॥ कस्य वशेप्राणिगणः सत्यप्रियभाषिणो विनीतस्य। क्व स्थातव्यं न्याय्ये पथि दृष्टादृष्टार्थलाभाय ॥२३॥ विद्युद्विलसितचपलं किं दुर्जनसंगतिर्युवतयश्च। कुलशीलनिष्प्रकम्पाके कलिकालेऽ

पि सत्पुरुषाः ॥२४॥ किंशोच्यंका
पंण्यं सति विभवे किं प्रशस्यमौदा
र्यं । तनुतरविभवस्यप्रभविष्णोर्वा
किं यत्सहिष्णुत्वं ॥२५॥ चिन्ता
मणिरिव दुर्लभमिह किं कथयामि
चतुर्भद्रं । किं तद्वदंति भूयो विधू
ततमसो विशेषेण ॥२६॥ दानं प्रि
यवाक्सहितं ज्ञानमगर्वं क्षमान्वितं
शौर्यं । वित्तं त्यागसमेतंदुर्लभमेत
च्चतुर्भद्रं ॥२७॥ इति कण्ठगता वि
मलप्रश्नोत्तररत्नमालिका येषां । तेऽमु
क्ताभरणा अपि विभान्ति विद्वत्स

माजेषु ॥२८॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचिता प्रश्नोत्तररत्नमालिका समाप्ता: ॥

अथ कल्किस्तवप्रारम्भः ।

श्रीगणेशाय नमः ॥ राजानऊचुः । गद्यानि । जय जय निजमायया कल्पिताशेषविशेषकल्पनापरिणामजलाप्लुतलोक त्रयोपकरणमाकलय्यमनुमनिशम्यपूरितमविजनाविजनाविर्भूत महामीनशरीर त्वंनिजकृत धर्मसेतुसंरक्षणकृताव

तारः ॥१॥ पुनरिह जलधिमथनाहृ
तदेवदानवगणानां मन्दराचलान
यनव्याकुलितानां साहाय्येनाहृत
चित्तः पर्वतोद्धरणामृत प्राशनरच
नावतारः कूर्माकारःप्रसीद परेशत्वं
दीननृपाणां ॥२॥ पुनरिह दितिज
बलपरिलंधितवासवसूदनावृत जि
तभुवनपराक्रमाहिरण्याक्ष निधनपृ
थिव्युद्धरणसंकल्पाभिनिवेशेनधृत
कोलावतार पाहि नः ॥३॥ पुनरि
ह त्रिभुवनजयिनो महाबलपराक्र
मस्य हिरण्यकशिपोरर्दितानां देव

वराणां भयभीतानां कल्याणायदि
तिसुतवधप्रेप्सुर्ब्रह्मणो वरदानादव
ध्यस्य नशस्त्रास्त्रै रात्रिदिवास्वर्ग
मर्त्यपातालतले देवगन्धर्वकिन्नरन
रनागैरिति विचिन्त्यनरहरिरूपेण
नखाग्रभिन्नासुं दष्टदन्तच्छदं त्य
क्तासुं कृतवानसि ॥ ४ ॥ पुनरिह
त्रिजगज्जयिनो बलेः सत्रे शक्रानु
जो वटुवामनो दैत्यसंमोहनाय त्रि
पदभूमियाच्ञाछलेन विश्वकायस्त
दुत्सृष्टजलसंस्पर्शविवृद्धमनोऽभि
लाषस्त्वं भूतले बलेर्दौवारिकत्वमं

गीकृतमुचितं दानफलं ॥ ५ ॥ पुन
रिह हैहयादिनृपाणाममितबलपरा
क्रमाणां नानामदोल्लङ्घितमर्या
दावर्त्मनांनिधनाय भृगुवंशजो जा
मदग्न्यः पितृहोमधेनुहरणप्रवृद्धम
न्युवशात् त्रिःसप्तकृत्वोनिःक्षत्रि
यां पृथिवीं कृतवानसि परशुरामा
वतारः ॥६॥ पुनरिह पुलस्त्यवंशा
वतंसस्य विश्रवसः पुत्रस्य निशा
चरस्य रावणस्य लोकत्रयतापन
स्य निधनमुररीकृत्य रविकुलजा
तदशरथात्मजो विश्वामित्रादस्त्र

प्युपलभ्यवने सीताहरणवशात्प्रवृ
द्धमन्युनाऽम्बुधिं वानरैर्निबध्य सग
णं दशकन्धरं हतवानसि रामावता
रः ॥ ७ ॥ पुनरिह यदुकुलजलधि
कलानिधिसकलसुरगण सेवितपा
दारविन्दद्वन्द्वो विविधदानवदैत्य
दलनलोकत्रयदुरिततापनो वसुदे
वात्मजो रामावतारो बलभद्रस्त्व
मसि ॥८॥ पुनरिह विधिकृतवेद
धर्मानुष्ठानाविहितनानादर्शनसघृ
णः संसारकर्मत्यागविधिना ब्रह्मा
भासविलासचातुरीप्रकृति विमान

नामसंवादयन्बुद्धावतारस्त्वमसि
॥९॥ अधुनाकलिकुलनाशावतारो
बौद्धपाषण्डम्लेच्छादीनां च वेदध
र्मसेतुपरिपालनाय कृतावतारः क
ल्किरूपेणास्मान् स्त्रीत्वनिरयादु
द्धृतवानसि तवानुकम्पां किमिहक
थयामः ॥१०॥ कृतब्रह्मादीनामवि
दितविलासावतरणं क्वनःकामावा
माकुलितमृगतृष्णार्त्तमनसाम् । सु
दुष्प्राप्यं युष्मच्चरणजलजालोकन
मिदं कृपापारावारः प्रमुदितदृशा
श्वासयनिजान ॥११॥ इति श्रीक

ल्किपुराणेऽनुभागवते भविष्ये द्वितीयांशे नृपकृतकल्किस्तवः स० ।

॥ अथ प्रातःस्मरणस्तोत्रं ॥

श्रीगणेशाय नमः । प्रातःस्मरामि स्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् । यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥ १ ॥ प्रातर्भजामि मनसो वचसामगम्यं वाचो विभान्ति निखिला यदनुग्रहेण । यन्नेति नेति वचनैर्निगमा अवोचं स्तं देवदेवमजमच्युतमाहुरग्र्यं ॥ २ ॥ प्रातर्न

मामितमसःपरमर्कवर्णं पूर्णंसनात
नपदंपुरुषोत्तमाख्यं । यस्मिन्निदं
जगदशेषमशेषमूर्तौ रज्ज्वांभुजंग
म इव प्रतिभासितंवै ॥३॥ श्लोकत्र
यमिदंपुण्यं लोकत्रयविभूषणं । प्रा
तःकालेपठेद्यस्तु सगच्छेत्परमंपदं
॥४॥ इति श्रीभगवत्पादाचार्यविर
चितं प्रातःस्मरणस्तोत्रं सं० ॥

अथ अश्वत्थ स्तोत्रं ।

श्रीगणेशाय नमः । श्रीनारद उ
वाच अनायासेनलोकोयं सर्वान्का
मानवाप्नुयात् । सर्वदेवात्मकंचैकं

तन्मेब्रूहिपितामह॥१॥ब्रह्मोवाच॥
शृणुदेवमुनेश्वत्थं शुद्धसर्वात्मकंत
रुम्।यत्प्रदक्षिणतोलोकःसर्वान्का
मान्समश्नुते ॥२॥ अश्वत्थाद्दक्षि
णेरुद्रः पश्चिमेविष्णुरास्थितः । ब्र
ह्माचोत्तरदेशस्थः पूर्वेत्विन्द्रादिदे
वताः ॥ ३॥ स्कन्धोपस्कन्धपत्रेषु
गोविप्रमुनयस्तथा । मूलंवेदापयो
यज्ञास्संस्थितामुनिपुंगव: ॥४॥ पू
र्वादिदिक्षुसंयाता नदीनदसरोब्ध
यः। तस्मात्सर्वप्रयत्नेन ह्यश्वत्थं
संश्रयेद्बुधः ॥५॥ त्वक्षीर्यफलक

श्चैव शीतलश्चवनस्पते । त्वामारा
ध्यनरोविद्या दैहिकामुष्मिकंफलं
॥६॥ चलद्दलायवृक्षाय सर्वदाश्रित
विष्णवे । बोधितत्त्वायदेवाय ह्यश्व
त्थायनमोनमः ॥ ७ ॥ अश्वत्थय
स्मात्त्वयिवृक्षराज नारायणस्तिष्ठ
तिसर्वकाले । अतःश्रुतस्त्वंसततंत
रूणां धन्योऽसिचारिष्टविनाशको
सि ॥८॥ क्षीरदस्त्वंचयेनेह येनश्री
स्त्वांनिषेवते । सत्येन तेनवृक्षेन्द्र
मामपिश्रीर्निषेवतां ॥ ९ ॥ एकाद
शातमरुद्रोसिवसुनाथाशिरोमणिः ।

नारायणोऽसिदेवानां वृक्षराजोऽसिपिप्पल ॥१०॥ अग्निगर्भः शमीगर्भो देवगर्भःप्रजापतिः । हिरण्यगर्भोभूगर्भोयज्ञगर्भोनमोस्तुते ११आयुर्बलंयशोवर्चः प्रजाःपशुवसूनिच । ब्रह्मप्रज्ञांचमेधाच त्वंनोधेहिवनस्पते ॥१२॥ सततंवरुणोरक्षत्वामाराद्वृष्टिराश्रयेत् । परितस्त्वांनिषेवन्तां तृणानिसुखमस्तुते ॥१३॥ अक्षिस्पन्दंभुजस्पन्दं दुःस्वप्नंदुर्विचिन्तनं । शत्रूणांचसमुत्थानंह्यश्वत्थ शमयप्रभो ॥१४॥ अश्वत्थायवरे

ण्याय सर्वैश्वर्यप्रदायिने । नमोदुः
स्वप्ननाशाय सुस्वप्नफलदायिने
॥१५॥ मूलतोब्रह्मरूपाय मध्यतो
विष्णुरूपिणे । अन्ततःशिवरूपाय
वृक्षराजायतेनमः ॥१६॥ यंदृष्ट्वामु
च्यतेरोगैःस्पृष्ट्वापापैःप्रमुच्यते । य
दाश्रयाच्चिरंजीवी तमश्वत्थं नमा
म्यहं ॥१७॥ अश्वत्थसुमहाभाग
सुभगप्रियदर्शना । इष्टान्कामांश्च
मेदेहि शत्रुभ्यस्तुपराभवं ॥१८॥
आयुःप्रजांधनंधान्यं सौभाग्यंसर्व
सम्पदं । देहिदेवमहावृक्ष त्वामहं

शरणंगतः ॥ १९ ॥ ऋग्यजुःसाम
मन्त्रात्मा सर्वरूपीपरात्परः । अ
श्वत्थोवेदमूलोसा वृषिभिःप्रोच्यते
सदा ॥२०॥ ब्रह्महा गुरुहा चैव द
रिद्रोव्याधिपीडितः । आवृत्य लक्ष
संख्यं तत्स्तोत्रमेतत्सुखीभवेत् २१
ब्रह्मचारीहविष्याशी त्वधः शायी
जितेन्द्रियः। पापोपहतचित्तोपि व्र
तमेतत्समाचरेत् ॥ २२ ॥ एकह
स्तं द्विहस्तं वा कुर्याद्गोमयलेपनं
अर्चेत्पुरुषसूक्तेन प्रणवेन विशेषतः
॥२३॥ मौनीप्रदक्षिणंकुर्यात्प्रागुक्त

फलभाग्भवेत् । विष्णोनामसहस्त्रे
ण ह्यच्युतस्यापिकीर्तनात् ॥२४॥
पदेपदान्तरंगत्वा करचेष्टाविवर्जि
तः । वाचास्तोत्रंमनो ध्याने चतुरं
गं प्रदक्षिणम् ॥ २५ ॥ अश्वत्थः
स्थापितो येन तत्कुलं स्थापितंत
तः। धनायुषां समृद्धिस्तु नरकात्ता
रयेत्पितॄन् ॥२६॥ अश्वत्थमूलमा
श्रित्यशाकान्नोदकदानतः । एक
स्मिन्भोजितेविप्रे कोटि ब्राह्मणभो
जनं ॥ २७ ॥ अश्वत्थ मूलमाश्रित्य
जपहोमसुरार्चनात् । अक्षयंफलमा

प्नोतिब्रह्मणोवचनं तथा॥२८॥एव
माश्वासितोऽश्वत्थःसदाश्वासायक
ल्पते। यज्ञार्थंछेदितेश्वत्थेह्यक्षयस्व
र्गमाप्नुयात् ॥२९॥ छिन्नो येनवृ
थाऽश्वत्थच्छेदिताः पितृदेवताः ॥
अश्वत्थः पूजितो यत्र पूजिताः स
र्वदेवता ॥३०॥ इति ब्रह्मनारदसं
वादे अश्वत्थस्तोत्रं सं० ॥

अथ नवग्रहस्तोत्रप्रारंभः ॥

श्रीगणेशाय नमः ॥ जपाकुसुम
संकाशं काश्यपेयं महाद्युतिं । त
मोरिं सर्वपापघ्नंप्रणतोस्मि दिवा

करं ॥१॥ दधिशंखतुषाराभं क्षीरा
र्णवसमुद्भवं । नमामिशशिनं सोमं
शम्भोर्मुकुटभूषणं ॥२॥ धरणीग
र्भसंभूतं विद्युत्कान्तिसमप्रभं । कु
मारंशक्तिहस्तं तं मंगलंप्रणमाम्य
हं॥३॥ प्रियङ्गुकलिकाश्यामंरूपे
णाप्रतिमंबुधं।सौम्यंसौम्यगुणोपेतं
तं बुधं प्रणमाम्यहं ॥४॥ देवानां
च ऋषीणांचगुरुं काञ्चनसन्निभं।
बुद्धिभूतं त्रिलोकेशंतं नमामि बृह
स्पतिं ॥५॥ हिमकुन्दमृणालाभंदै
त्यानांपरमं गुरुं । सर्वशास्त्रप्रवक्ता

रं भार्गवं प्रणमाम्यहं ॥६॥ नीला
ञ्जनसमाभासं रविपुत्रं यमाग्रजं।
छायामार्तण्डसम्भूतं तं नमामि श
नैश्चरं ॥ ७ ॥ अर्धकायं महावीर्यं
चन्द्रादित्यविमर्दनं सिंहिकागर्भसं
भूतं तं राहुंप्रणमाम्यहं ॥८॥ पला
शपुष्पसंकाशं तारकाग्रहमस्तकं।
रौद्रं रौद्रात्मकं घोरंतं केतुं प्रणमा
म्यहं ॥ ९ ॥ इति व्यासमुखोद्गीतं
यः पठेत्सुसमाहितः। दिवा वायदि
वा रात्रौ विघ्नशान्तिर्भविष्यति ॥
॥१०॥ नरनारीनृपाणां च भवेद्दुः

स्वप्ननाशनं । ऐश्वर्यमतुलं तेषामा
रोग्यं पुष्टिवर्धनं ॥११ग्रहनक्षत्रजाः
पीडास्तस्कराग्निसमुद्भवाः । ताःस
र्वाः प्रशमं यान्ति व्यासोब्रूते न सं
शयः ॥१२॥ इति श्रीव्यासविरचि
तं नवग्रहस्तोत्रं संपूर्णं ॥

अथ शनिस्तोत्रप्रारभः ।

श्रीगणेशाय नमः ॥ अस्य श्री
शनैश्वरस्तोत्रमन्त्रस्य दशरथ ऋ
षिः । शनैश्चरोदेवता । त्रिष्टुप्छ
न्दः । शनैश्चरप्रीत्यर्थं जपेविनियो
गः । दशरथ उवाच ॥ कोणान्तको

रौद्रयमोथ बभ्रुः कृष्णः शनिः पिङ्ग
लमन्दसौरिः। नित्यं स्मृतो यो ह
रतेच पीडां तस्मै नमः श्रीरविनन्द
नाय ॥ १ ॥ सुरासुराः किंपुरुषोरगे
न्द्रा गन्धर्वविद्याधरपन्नगाश्च। पी
ड्यन्ति सर्वैविषमास्थितेनत० ॥२॥
नरा नरेन्द्रः पशवो मृगेन्द्रा वन्या
श्च येकीटपतंगभृंगाः। पीड्यन्ति स
र्वै विषमास्थितेन० ॥३॥ देशाश्चदु
र्गाणि वनानि यत्र सेनानिवेशाःपुर
पत्तनानि। पीण्डान्ति सर्वैविषमास्थ
तेन त० ॥४॥ तिलैर्यवैर्माषगुडान्न

दानैर्लोहेन नीलाम्बरदानतो वा ।
प्रीणाति मन्त्रैर्निजवासरे च त० ५॥
प्रयागकूले यमुनातटे च सरस्वती
पुण्यजले गुहायां। योयोगिनांध्यान
गतोपि सूक्ष्मस्त० ॥६॥ अन्यप्रदे
शात्स्वगृहं प्रविष्टस्तदीयवारे स न
रः सुखी स्यात् । गृहाद्गतोयो नपु
नःप्रयाति त० ॥७॥ स्रष्टा स्वयंभू
र्भुवनत्रयस्यत्राता हरीशो हरतेपि
नाकी। एकस्त्रिया ऋग्यजुः साम
मूर्तिस्त० ॥८॥ शन्याष्टकं यः प्र
यतः प्रभाते नित्यं स पुत्रैः पशुबा

न्धवैश्च । पठेच्च सौख्यं भुवि भो
गयुक्तः प्राप्नोति निर्वाणपदं तदन्ते
॥९॥ कोणस्थः पिंगलो बभ्रुः कृष्णो
रौद्रान्तको यमः । सौरिः शनैश्चरो
मन्दः पिप्पलादेन संस्तुतः ॥१०॥
एतानि दश नामानि प्रातरुत्थाय
यः पठेत् । शनैश्चरकृता पीडा न
कदाचिद्भविष्यति ॥ ११ ॥ इति द
शरथप्रोक्तं श्रीशनैश्चरस्तोत्रं सं०॥

अथ ऋणमोचकमंगलस्तोत्रप्रारंभः।

श्रीगणेशाय नमः मंगलो भूमि
पुत्रश्च ऋणहर्ता धनप्रदः । स्थिरास

नीमहाकायः सर्वकामविरोधकः॥
॥१॥ लोहितोलोहिताक्षश्च साम
गानांकृपाकरः। धरात्मजः कुजो
भौमो भूतिदोभूमिनन्दनः ॥ २ ॥
अंगारकोयमश्चैव सर्वरोगापहार
कः। वृष्टिकर्ताऽपहर्ताच सर्वकाम
फलप्रदः ॥३॥ एतानिकुजनामानि
नित्यंयःश्रद्धयापठेत्। ऋणंनजाय
तेतस्य धनंशीघ्रमवाप्नुयात् ॥४॥
धरणीगर्भसंभूतं विद्युत्कांतिसमप्र
भं। कुमारंशक्तिहस्तंच मंगलंप्रण
माम्यहं ॥५॥ स्तोत्रमंगारकस्यैत

त्पठनीयंसदानृभिः । नतेषांभौम
जापीडा स्वल्पापिभवतिक्वचित्॥
॥६॥ अंगारकमहाभाग भगवन्भ
क्तवत्सल: । त्वांनमामिममाशेष
मृणमाशु विनाशय ॥ ७॥ ऋणरो
गादिदारिद्र्यंयेचान्येचापमृत्यवः ।
भयक्लेशमनस्तापा नश्यन्तुममस
र्वदा ॥८॥ अतिवक्रदुराराध्य भोग
मुक्तजितात्मनः। तुष्टो ददासिसा
म्राज्यं रुष्टोहरसितत्क्षणात् ॥९॥
विरिञ्चिशक्रविष्णूनां मनुष्याणांतु
काकथा । तेनत्वंसर्वसत्वेन महारा

जोमहाबलः ॥१०॥ पुत्रान्देहिधनं
देहि त्वामस्मिशरणंगतः। ऋणदा
रिद्यदुःखेन शत्रूणांच भयात्ततः ॥
॥११॥ एभिर्द्वादशभिश्श्लोकैर्यःस्तौ
तिचधरासुतं।महतींश्रियमाप्नोति
ह्यपरोधनदोयुवा ॥ १२ ॥ इति श्री
स्कन्दपुराणे भार्गवप्रोक्तं ऋणमो
चकमंगलस्तोत्रं सम्पूर्णं ।

अथकाशीमहिम्नस्तोत्रप्रा०।

श्रीगणेशाय नमः। हुतंचापिभु
क्तंगतंशम्भुयात्रा सुषुप्तिश्चयोगः
कथाचापि वार्ता। स्वकृत्यंभवेत्पु

जनंयत्रशम्भोः सदाशंकरीकाशि
काशंकरोतु ॥१॥ अनित्ये हिनाकः
पुनः संसृतिर्यन्महेन्द्रोऽपि दुःखत्र
यस्याभिहत्यै । सकाश्यां मृतिं कां
क्षतेकाकथान्या सदाशंकरीकाशि
काशंकरोतु ॥२॥ पुरापुण्यपापादि
कर्माऽखिलंयत् सदाहञ्ज्यते भ
ज्यतेयत्रकाश्याम् । मृतेतारकंस्व
ष्टदेवोदिशेच्च सदा शं० ॥३॥ जले
वास्थलेवापवित्रेऽशुचौवा नरे वा प
शौवामृतेकीटकादौ । नरीनृत्यते
यत्रमुक्तिर्यदर्थं सदा शं० ॥४॥ न

पूजामयाशम्भुलिंगस्यसम्यक् कृ
तागांगतोयैःसमालूरपत्रैः । सगंधा
क्षतैर्धूपदीपैश्चभक्षैः सदा शं० ५॥
नवेदाःस्वधीता न गीता सुगीता न
पीता मया जाह्नवीतोयमात्रा । नवा
ऽचिन्तिचित्तेनवाचन्द्रचूडः । सदा
शं० ॥६॥ नदत्तंमयाभूरिदानंद्विजे
भ्यो नतप्तंतपःक्षेत्रमध्येकदापि ॥
नवाऽचिन्ति चिन्त्योहरिर्वाहरोवा
सदा शं० ॥७॥ स्मृताकामिनीपू
जिताःपुत्रपौत्राःमनोवित्तकृत्येऽधि
कंश्वासरोधः । परस्याऽपकारेकृधा

चाभितप्तं सदा शं० ॥८॥ गृहेवि
त्तपुत्रैकलत्रैश्चचित्तं नियुक्तं निवृत्तं
कथंमेभवेत्तत् । अतः काशिकामा
श्रयेमुक्तिदात्रीं सदा शं० ॥९॥ पि
ताचापिमातागुरुःस्वेष्टदाता शुभं
यत्त्वमेजन्मजन्मान्तरेषु । सहायो
भवेत्काशिकाप्राप्तिकालेसदा शं०
१० श्रुतिर्वेदमध्येस्मृतिशास्त्रमध्ये
पुराणानि नानाऋषीणांचवृन्दम् ॥
प्रशंसन्ति काश्यां मृतस्यवै मुक्तिं
सदा शंकरी काशिका शं करोतु।
॥११॥ आस्तांयद्यपि रामचंद्रनग

री कृष्णस्य जन्मावनिर्माया नाम
पुरी पुरी भगवतः काञ्चीपुरी पाव
नी । नाम्नैव प्रकटीकृतस्वमहिमा
ऽवन्तीच द्वारावती ह्येताः सन्तुपरं
तु जन्तुनिकरोद्धारे न काशीसमा
॥१२॥ गंगातटी धूर्जटिरेव दिक्पट
टी नटीव मुक्तिर्नरिनार्त्तियत्र । का
शीतटीसुष्टुकुटीं विहायवै नचाऽ
न्यदस्तीह जनस्यतारकं ॥१३॥ स
कलविविधलीला लौकिकाः सन्तु
रामः सकलविषयभोगात्संततं नो
विरामः । हरमृडशिवशब्दैः संस्मृ

तिं संतरामः प्रकृतमनुसरामः का
शिकामाश्रयामः ॥ १४ ॥ काशीर
तिर्यद्धृदये विराजते किं तस्य या
गाद्यखिलैश्चकर्मभिः । काशीति का
शीति समुच्चरन्नरदेहे प्रयाणकालेल
भते हि काशीं ॥१५॥ काशी स्तुतिं
पठति यो मनुजःप्रभाते चित्तेविचि
न्त्यमहिमानमुमेशकाश्याः । भु
क्त्वायथेष्टमिह पुत्रकलत्रसौख्यम
न्ते गिरीशनगरे लभते च मोक्षं१६
इति श्रीहरिहरब्रह्मविरचितं काशी
माहिम्नःस्तोत्रं सम्पूर्णं ॥

अथ श्रीमच्छंक० गंगाष्टकप्रारंभः ।

श्रीगणेशाय नमः ॥ भगवति भवलीलामौलिमाले तवांभः कण मणुपरिमाणं प्राणिनो ये स्पृशन्ति अमरनगरनारीचामर ग्राहिणीनां विगतकलिकलंकातंकमंके लुठन्ति ॥१॥ ब्रह्माण्डं खण्डयन्ती हरशिर सि जटावल्लिमुल्लासयन्ती स्वर्लो कादापतन्ती कनकगिरिगुहागण्ड शैलात्स्खलन्ती । क्षोणीपृष्ठे लुठ न्ती दुरितचयचमूनिर्भरं भर्त्सय न्ती पाथोधिं पूरयन्ती सुरनगरस

रित्पावनी नः पुनातु ॥ २ ॥ मज्जन्मातंग कुम्भच्युतमदमादिरामोदमत्तालिजालं स्नानैः सिद्धांगनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गं । सायंप्रातर्मुनीनां कुशकुसुमचयैश्छन्नतीरस्थनीरं पायान्नोगांगमम्भः करिकरमकराक्रान्तरंहस्तरंगं ॥ ३ ॥ आदावादिपितामहस्यनियमव्यापारापात्रेजलंपश्चात्पन्नगशाइनोभगवतःपादोदकं पावनं भूयः शंभुजटाविभूषणमणिर्जन्होर्महर्षेरियं कन्या कल्मषनाशिनी

भगवती भागीरथीभूतले ॥४॥ शै
लेंद्रादवतारिणी निजजलेमज्जज्ज
नोत्तारिणी पारावारविहारिणीभव
भयश्रेणीसमुत्सारिणी । शेषांगैर
नुकारिणी हरशिरोवल्ली दलाका
रिणी काशीप्रान्तविहारिणी विजय
ते गंगामनोहारिणी ॥५॥ कुतो वी
चिर्वीचिस्तव यदिगता लोचनपथं
त्वमापीतापीताम्बरपुरनिवासं वि
तरसि । त्वदुत्संगे गंगेपतति यदि
कायस्तनुभृतां तदा मातः शातक्र
तवपदलाभोप्यतिलघुः ॥६॥ भग

पतितव तीरे नीरमात्राशनोऽहं वि
गतविषयतृष्णः कृष्णमाराधयामि।
सकलकलुषभंगे स्वर्गसोपानसंगेत
रलतरतरंगे देवि गंगे प्रसीद ॥ ७ ॥
मातःशाम्भविशम्भुसंगमिलितेमौ
लौ निधायाञ्जलिंत्वत्तीरे वपुषोऽव
सानसमये नारायणाङ्घ्रिद्वयं। सा
नन्दं स्मरतो भविष्यतिमम प्राण
प्रयाणोत्सवे भूयाद्भक्तिरविच्युता
हरिहरद्वैतात्मिका शाश्वती ॥ ८ ॥
गंगाष्टकमिदं पुण्यं यः पठेत्प्रयतो
नरः : सर्वपापविनिर्मुक्तो विष्णुलो

कं स गच्छति ॥९॥ इति श्रीमत्प
रमहंसपरि० श्रीमच्छंकराचार्यवि
रचितं गंगाष्टकस्तोत्रंसम्पूर्णं ॥

अथ वाल्मीकिकृतगंगाष्टकप्रारंभः ।

श्रीगणेशाय नमः ॥ मातः शैल
सुतासपत्निवसुधाशृंगार हारावलि
स्वर्गारोहणवैजयंति भवतीं भागी
रथीं प्रार्थये । त्वत्तीरवसतस्त्वदम्बु
पिबतस्त्वद्वीचिषु प्रेंखतस्त्व न्नाम
स्मरतस्त्वदर्पितदृशः स्यान्मेशरी
रव्ययः ॥१॥ त्वत्तीरे तरुकोटरांत
रगतो गंगे विहंगो वरं त्वन्नीरे नर

कान्तकारिणि वरं मत्स्योऽथवा क
च्छपः । नैवान्यत्र मदान्धसिंधुरघ
टासंघट्टघंटारणत् कारत्रस्त सम
स्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥
॥ २ ॥ उक्षा पक्षी तरग उरगःकोऽ
पिवा वारणोवा वाराणस्यां जनन
मरणक्लेशदुःखासहिष्णुः । न त्व
न्यत्रप्रविरलरण त्कंकणक्काणमिश्रं
वारस्त्रीभिश्चमर मरुता वीजितो
भूमिपालः ॥ ३ ॥ काकैर्निष्कुषितं
श्वभिःकवलितं गोमायुभिर्लुण्ठितं
स्रोतोभिश्चलितंजटाम्बुलुलितं वी

च्चीभिरांदोलितं । दिव्यस्त्रीकरचा
रुचामरमरुत्संवीजमानः कदा द्र
क्ष्येहं परमेश्वरि त्रिपथगे भागीरथि
स्वंवपुः ॥४॥ अभिनवबिसवल्ली
पादपद्मस्य विष्णोर्मदनमथनमौले
र्मालतीपुष्पमाला । जयतिजयपता
का काप्यसौ मोक्षलक्ष्म्याः क्षपित
कलिकलंका जान्हवी नः पुनातु ॥
॥५॥ एतत्तालतमाल साल सरल
व्यालोलवल्लीलता च्छन्नं सूर्यकर
प्रतापरहितं शंखेन्दुकुन्दोज्ज्वलं ।
गन्धर्वामरसिद्धकिन्नरवधू त्तुंगस्त

मास्फालितं स्नानायप्रतिवासरंभ
वतुमे गांगंजलं निर्मलं ॥६॥ गांगं
वारिमनोहारि मुरारिचरणच्युतं ।
त्रिपुरारिशिरश्चारि पापहारिपुना
तुमां ॥७॥ पापापहारिदुरितारित
रंगधारि शैलप्रचारि गिरिराजगुहा
विदारि । झंकारकारि हरिपादरजो
पहारि गांगंपुनातु सततं शुभकारि
वारि ॥८॥ गंगाष्टकं पठति यः
प्रयतः प्रभाते वाल्मीकिना विरचि
तं शुभद मनुष्यः । प्रक्षाल्यगात्रक
लिकल्मषपंकमाशु मोक्षं लभेत्पत

तिनैवनरोभवाब्धौ ॥९॥ इति श्री वाल्मीकिना विरचितं गंगाष्टकं सम्पूर्णं ।

अथ कालिदासकृतगंगाष्टकप्रारंभः ॥

श्रीगणेशाय नमः । कत्यक्षीणि करोटयःकतिकतिद्वीपिद्विपानांत्वचः काकोलाःकतिपन्नगाः कतिसुधा धाम्नश्चखण्डाःकति । किंचत्वं चकतित्रिलोकजननि त्वद्वारिपूरोदरे मज्जज्जन्तुकदम्बकंसमुदयत्येकैकमादाययत् ॥१॥ देवित्वत्पुलिनांगणेस्थितिजुषां निर्मानिनां

ज्ञानिनां स्वल्पाहारानिबद्धशुद्धवपुषां तार्णगृहे श्रेयसे । नान्यत्राक्षितिमण्डलेश्वरशतैःसंरक्षितोभूपतेःप्रासादोल्ललनागणैरधिगतो भोगीन्द्रभोगोन्नतः ॥२॥ तत्तत्तीर्थगतैःकदर्थनशतैः किं तैरनर्थाश्रितै ज्योतिष्टोममुखैः किमीशविमुखै यज्ञैरवज्ञाहतैः । सूतेकेशववासवादिविबुधा गाराभिरामांश्रियं गंगेदेविमवत्तटेयदिकुटी वासःप्रयासंविना ३॥ गंगातीरमुपेत्यशीतलशिला मालम्ब्यहैमाचलीं यैतुहर्लीकुणकाकूरा

लतया कल्लोलकोलाहलः । तेशृण्व
न्तिसुपर्वपर्वतशिलासिंहासनाध्या
सनाः सङ्गीतागमशुद्धसिद्धरमणी
मंजीरधीरध्वनिम् ॥४॥ दूरंगच्छस
कच्छगंच्चभवतो नालोकयामोमुखं
रेपाराकवराकसाकमितरै नाकप्रदै
र्गम्यताम् । सद्यःप्रोद्यसमन्दमारु
तरजः प्राप्ताकपोलस्थले गंगांभः
कणिका विमुक्तगणिका संगायसं
भाव्यते ॥५॥ विष्णोःसंगतिकारि
णीहरजटा जूटाटवीचारिणी प्राय
श्चित्तनिवारिणीजलकणैः पुण्यौघ

विस्तारिणी । भूभृत्कन्दरदारिणी निजजले मज्जज्जनोत्तारिणी श्रेयःस्वर्गविहारिणी विजयते गंगामनोहारिणी ॥६॥ वाचालं विकलं खलं श्रितमलं कामाकुलं व्याकुलं चण्डालं तरलं निपीतगरलं दोषाविलं चाखिलं । कुम्भीपाकगतं तमंतककराद्आकृष्य कस्तारयेन्मातर्जन्हुनरेन्द्रनन्दिनि सर्वस्वल्पोदबिन्दुं विना ॥७॥ श्लेष्मश्लेषणयानलेऽमृतविले कासाकुले व्याकुले कण्ठे घर्घरघोषनादमलिने कायेच संमीलति ।

यांध्यायन्नपिभारभंगुरतरां प्राप्नो
तिमुक्तिंनरः स्नातुश्चेतसिजान्ह
वीनिवसतां संसारसंतापहृत् ॥८॥
इति श्रीमत्कालिकादासविरचितंगं
गाष्टकस्तोत्रं सम्पूर्णं ।

अथ गंगाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । नमस्तेऽस्तु
गंगे त्वदंगप्रसंगाद्भुजंगास्तुरंगाः
कुरंगाःप्लवंगा । अनंगारिरंगाःसगं
गाःशिवांगा भुजंगाधिपांगाकृतांगा
भवन्ति ॥ १ ॥ नमोजन्हुकन्येनम
न्येत्वदन्यै र्निसर्गेन्दुचिन्हादिभि

लोकभर्तुः । अतोऽहं नतोऽहं सतां गौरतोये वसिष्ठादिभिर्गीयमानाभिधेये ॥२॥ त्वदामज्जनात्सज्जनो दुर्जनो वा विमानैः समानैः समानैर्हि मानैः । समायाति तस्मिन्पुरारातिलोके पुरद्वारसंरुद्धदिक्पाललोकैः ॥ ॥३॥ स्वरावासदम्भोलिदम्भोऽपि रम्भा परीरम्भसम्भावनाधीरचेताः । समाकांक्षते त्वत्तटे वृक्षवाटी कुटीरे वसन्नेतुमायुर्दिनानि ॥४॥ त्रिलोकस्य भर्तुर्जटाजूटबन्धात्स्वसीमान्तभागे मनाक्प्रस्खलन्तः । भवा

न्यारुषाप्रौढसापत्नभावा त्करेणाह
तास्त्वत्तरंगाजयंति ॥५॥ जलोन्म
ज्जदैरावतोद्दानकुम्भ स्फुरत्प्रस्ख
लत्सान्द्रसिन्दूररागे। क्वचित्पद्मि
नीरेणुभंगेप्रसंगे मनः खेलतांजन्हु
कन्यातरंगे ॥६॥ भवत्तीरवानीरवा
तोत्थधूली लवस्पर्शतस्तत्क्षणं क्षी
णपापः। जनोऽयंजगत्पावनेत्वत्प्र
सादात्पदे पौरुहूतेऽपिधत्तेऽवहेला
म् ॥७॥ त्रिसन्ध्यानमल्लेखकोटीर
नाना विधानैकरत्नांशुविम्बप्रभा
भिः। स्फुरत्पादपीठे हठेनाष्टमूर्तै

जटाजूटवासे नतास्मः पदं ते ॥८॥
इदं यः पठेदष्टकं जन्हुपुत्र्या स्त्विका
लंकृतं कालिदासेन रम्यं । समाया
स्यतीन्द्रादिभिर्गीयमानं पदं कैश
शैशवं नो लभेत्सः ॥९॥ इति श्री
कालिदासकृतं गंगाष्टकस्तोत्रं सं० ।

अथ गंगास्तवप्रारंभः ।

श्रीगणेशाय नमः ॥ सूत उवा
च ॥ शृणुध्वं मुनयः सर्वे गंगास्तव
मनुत्तमं । शोकमोहहरं पुंसामृषि
भिः परिकीर्तितं ॥१॥ ऋषय ऊचुः
इयं सुरतरंगिणी भवनवारिधेस्ता

रिणी स्तुता हरिपदाम्बुजादुपगता
जगत्संसदः । समेरुशिखरामरप्रि
यजलामलक्षालिनी प्रसन्नवदनाशु
भा भवभयस्य विद्राविणी ॥२॥ भ
गीरथरथानुगा सुरकरीन्द्रदर्पापहा
महेशमुकुटप्रभा गिरिशिरःपताका
सिता । सुरासुरनरोरगैरजभवाच्यु
तैःसंस्तुता विमुक्तिफलशालिनी क
लुषनाशिनी राजते ॥ ३ ॥ पिताम
हकमण्डलुप्रभवमुक्तिबीजा लता
श्रुतिस्मृतिगणस्तुताद्विजकुलालवा
लावृता । सुमेरुशिखराद्भिदा निप

तिता त्रिलोकावृता सुधर्मफलशा लिनी सुखपलाशिनी राजते ॥४॥ चराद्विहगमालिनी सगरवंशमुक्ति प्रदा मुनीन्द्रवरनान्दिनी दिविमता च मन्दाकिनी । सदा दुरितनाशि नी विमलवारिसंदर्शनप्रणामगुण कीर्तनादिषु जगत्सु संराजते ॥५॥ महाभिषसुतांगना हिमगिरीशकूट स्तना सफेनजलहासिनीसितमरा लसञ्चारिणी । चलल्लहरिसत्करा वरसरोजमालाधरारसोल्लसितगा मिनी जलधिकामिनी राजते ॥६॥

क्वचिन्मुनिगणैः स्तुता क्वचिदन
न्तसंपूजिता क्वचित्कलकलस्वना
क्वचिदधीरयादोगणा । क्वचिद्रवि
करोज्ज्वला क्वचिदुदग्रपाताकुला
क्वचिज्जनविगाहिना जयतिभीष्म
माता सती ॥७॥ स एव कुशली
जनः प्रणमतीह भागीरथीं सएवत
पसांनिधिर्जपति जान्हवीमादरात् ।
स एवपुरुषोत्तमः स्मरति साधु म
न्दाकिनीं सएव विजयी प्रभुःसुरत
रङ्गिणीं सेवते ॥८॥ तवामलजला
श्चितं खगसृगालमीनक्षतं चलल्लह

रिलोलितं त्वच्चिरतीरजम्बालितं । कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽप्यहं त्रिपथगामिनि प्रियमतीव पश्याम्यहो ॥९॥ त्वत्तीरेवसतिं तवामलजलस्नानं तव प्रेक्षणं त्वन्नामस्मरणं तवोदयकथासंलापनं पावनं । गंगे मे तवसेवनैकनिपुणोप्यानन्दितश्चादृतः स्तुत्वा त्वोद्गतपातको भुवि कदाशान्तश्चरिष्याम्यहं ॥१०॥ इत्येतदृषिभिः प्रोक्तं गंगास्तवनमुत्तमं । स्वर्ग्यं यशस्यमायुष्यं पठनाच्छ्रवणादपि ॥११॥

सर्वपापहरं पुंसांबलमायुर्विवर्धनं । प्रातर्मध्यान्हे सायान्हे गंगासान्निध्यता भवेत् ॥१२॥ इत्येतद्भार्गवाख्यानं शुकदेवान्मया श्रुतं । पठितं श्रावितं चात्र पुण्यं धन्यं यशस्करं ॥१३॥ अवतारंमहाविष्णोःकल्केः परममद्भुतं । पठतांशृण्वतांभक्त्या सर्वाशुभविनाशनं ॥१४॥ इति श्री कल्किपुराणेऽनुभावगते भविष्ये तृतीयांशे क्रांषकृतो गंगास्तवःसं०

अथ सत्यज्ञानानन्दकृतगंगाष्टकप्रारम्भः ।

श्रीगणेशाय नमः ॥ यदवधि त

व नीरं पातकी नेति गंगे तदवधिम
लजालैर्नैवमुक्तः कलौ स्यात् । तव
जलकणिकाऽलं पापिनां पापशुद्ध्यै
पतितपरमदीनांस्त्वं हि पासि प्रप
न्नान् ॥१॥ तव शिवजललेशं वायु
नीतं समेत्य सपदि निरयजालं शू
न्यतामेति गंगे । शमलगिरिसमूहाः
प्रस्फुटन्ति प्रचण्डास्त्वयि सखिवि
शतां नः पापशंका कुतः स्यात् ॥२॥
तवशिवजलजालं निःसृतं यर्हि गंगे
सकलभुवन जालं पूतपूतं तदाऽभूत्
यमभटकलिवार्ता देवि लुप्ता यमो

पि व्यधिकृतवरदेहाः पूर्णकामाः स
कामाः ॥३॥ मधुमधुवनपूगैरत्नपू
गैर्नृपूगैर्मधुमधुवनपूगैर्देवपूगैः सपू
गैः। पुरहरपरमांगे भासिमायेव गं
गे शमयसि विषतापं देवदेवस्य ब
न्धं ॥४॥ चलितशशिकुलाभैरुत्त
रंगैस्तरंगैरमितनदनदीनामंग संगै
रसंगैः। विहरसि जगदण्डं खण्डय
न्ती गिरीन्द्रान्रमयसि निजकांतं
सागरं कान्तकान्ते ॥५॥ तव पर
महिमानं चित्तवाचाममानं हरिह
रविधिशक्रा नापि गंगे विदन्ति। श्रु

तिकुलमभिधत्ते शंकितं तं गुणान्तं गुणगणसु विलापैर्नेति नेतीति स त्यं ॥६॥ तव नुतिनतिनामान्यप्यघं पावयन्ति ददति परमशांतिं दिव्यभोगाञ्जनानां । इति पतितशरण्ये त्वां प्रपन्नोऽस्मि मातर्ललिततरतंगे देवि गंगे प्रसीद ७ शुभतरकृतयोगा द्विश्वनाथप्रसादाद्भवहरपरविद्यां प्राप्य काश्यां हि गंगे । भगवति तव तीरे नीरसारं निपीयमुदितहृदयकञ्जे नन्दसूनुं भजेऽहं ८ गंगाष्टकमिदं कृत्वा भुक्तिमुक्तिप्र

दैन्नृणां । सत्यज्ञानानन्दतीर्थ यति नास्वर्पितंशिवे ॥९॥ तेनप्रीणातुभगवान् शिवोगंगाधरोविभुः । करोतुशंकरःकाश्यां जनानांसततंशिवं ॥१०॥ इति सत्यज्ञानानन्दतीर्थ विरचितं गंगाष्टकंसम्पूर्णं ।

अथ नर्मदाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । सबिन्दुसिन्धुसुस्खलत्तरंगभंगरञ्जितंद्विषत्सुपापजातजातकारि वारिसंयुतं । कृतान्तदूतकालभूत भीतिहारिवर्मदे त्वदीयपादपंकजं नमामिदेविनर्मदे

दे ॥१॥ त्वदम्बुलीनदीनमीनदिव्यसम्प्रदायकं कलौमलौघभारहारिसर्वतीर्थनायकं । सुमच्छकच्छनक्रचक्रचक्रवाकशर्मदे त्वदीयपादपंकजं नमामिदेविनर्मदे ॥२॥ महागभीरनीरपूर पापधूतभूतलं ध्वनत्समस्तपातकारि दारितापदाचलं जगल्लयेमहाभये मृकण्डुसूनुहर्म्यदे त्वदीय० ॥ ३ ॥ गतंतदैवमेभयं त्वदम्बुवीक्षितंयदा मृकण्डुसूनुशौनकासुरारिसेविसर्वदा । पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्व

दीय० ॥४॥ अलक्षलक्षकिन्नरामरा
सुरादिपूजितं सुलक्षनीरतीरधीरप
क्षिलक्षकूजितं । वसिष्ठ सिष्टपिप्प
लादिकर्दमादिशर्मदे त्वदीय० ५॥
सनत्कुमारनाचिकेतकश्यपा त्रिष
ट्पदै धृतंस्वकीयमानसेषु नारदा
दिषट्पदैः । रवीन्दुरन्तिदेवदेव रा
जकर्मशर्मदे त्वदीय० ॥६॥अलक्ष
लक्षलक्षपापलक्षसारसायुधं ततस्तु
जीवजन्तुतन्तुभुक्तिमुक्तिदायकं ।
विरंचिविष्णुशंकर स्वकीयधामव
र्मदे त्वदी० ॥७॥ अहोमृतंस्वनंश्रु

तं महेशकेशजातटे किरातसूतवा
डवेषु पण्डितेशठेनटे । दुरन्तपाप
तापहारि सर्वजन्तुशर्मदे त्वदीय०
॥८॥ इदं तु नर्मदाष्टकं त्रिकालमे
व ये सदा पठन्ति ते निरन्तरं नया
न्ति दुर्गतिं कदा । सुलभ्यदेहदुर्ल
भं महेशधामगौरवं पुनर्भवा नरा
न वै विलोकयन्ति रौरवं ॥९॥ इ
ति श्रीमच्छंकराचार्यविराचितं नर्म
दाष्टकस्तोत्रं सम्पूर्णं ।

अथ यमुनाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । मुरारिकाय

कलिमालल्लामवारिधारिणी तृणी
कृतत्रिविष्टपात्रिलोकशोकहारिणी
मनोऽनुकूलकूलकुंजपुंजधूतदुर्मदा
धुनोतु मे मनोमलं कलिन्दनंदिनी
सदा ॥१॥ मलापहारिवारिपूरिभू
रि मण्डितामृता भृशं प्रपातकप्रप
ञ्चनाति पण्डितानिशा । सुनन्दन
न्दिनांग संगरागरंजिताहिता धु
नो० ॥२॥ लसत्तरंगसंगधूत भूत
जातपातका नवीनमाधुरीधुरीण भ
क्तिजातचातका । तटान्तवासदा
सहंससंसृतान्हिकामदा धुनो० ॥

॥३॥ विहाररासखेदभेद धीरतीर मारुता गतागिरामगोचरे यदीय नीरचारुता । प्रवाहसाहचर्यपूतमे दिनी नदीनदा धुनो० ॥४॥ तरंग संगसैकतान्तरान्तितं सदासिता शरन्निशाकरांशुमंजुमंजरी सभा जिता । भवार्चनाप्रचारुणां बुनाधु नानिशारदाधुनो० ॥५॥ जलान्त केलिकारि चारुराधिकांगरागिणी स्वभर्तुरन्यदुर्लभां गतांगतांशभा गिनी । स्वदत्तसुप्तसप्तसिंधुभेदि नातिकोविदा धुनो० ॥६॥ जलच्यु

ताच्युतांगरागलम्पटालि शालिनी विमोलराधिकाकचान्तचम्पकालि मालिनी। सदावगाहनावतीर्णभर्तृ भृत्यनारदा धुनो० ॥७॥ सदैव नन्दिनन्दकेलिशालिकुञ्जमंजुला तटोत्थफुल्लमाल्लिका कदम्बरेणु सूज्ज्वला। जलावगाहिनां नृणांभवाब्धिसिन्धुपारदा धुनो० ॥८॥ इति श्रीमच्छङ्कराचार्यविरचितं यमुनाष्टकं सं० ॥

अथ यमुनाष्टकप्रारम्भः।

॥ श्रीगणेशाय नमः ॥

कृपापारावारां तपनतनयां ता पशमनीं मुरारिप्रेयस्यां भवभय दवां भक्तिवरदां ॥ वियज्जालान्मु क्तां श्रियमपि सुखाप्तेः परिदिनं स दाधीरो नूनं भजति यमुनां नित्य फलदां ॥१॥ मधुवनचारिणि भा स्करवाहिनि जान्हविसंगिनि सिंधु सुते मधुरिपुभूषिणिमाधवतोषिणि गोकुलभीतिविनाशकृते । जगदघ मोचनि मानसदायिनीकेशवकेलि निदानगते जय यमुने जय भीति निवारिणि संकटनाशिनिपावय मां

॥२॥ अयिमधुरे मधुमोदविलासि
नि शैलविदारिणिवेगभरे परिजन
पालिनि दुष्टनिषूदिनिवाञ्छितका
मविलासधरे । ब्रजपुरवासिजना
र्जितपातकहारिणि विश्वजनोद्धरि
केजय० ॥३॥ अतिविपदाम्बुधिम
ग्नजनं भवतापशताकुल मानसकं
गतिमतिहीनमशेषभयाकुल माग
तपादसरोजयुगं । ऋणभयभीति
मनिष्कृति पातककोटि शतायुतपुं
जतरं जय०॥४॥ नवजलद्युतिको
टिलसत्तनुहेममयाभरणां चितके

तडिदवहेलि पदाञ्चलचञ्चलशोभि
तपीत सुचैलधरे । मणिमयभूषण
चित्रपटासनरंजितगंजित भानुकरे
जय० ॥५॥ शुभपुलिने मधुमत्तय
दूद्धवरासमहोत्सवकेलिभरे उच्च
कुलाचलराजित मौक्तिकहारमया
भररोदासिके । नवमणिकोटिकभा
स्करकंचुकिशोभित तारकहारयुते
जय० ॥६॥ करिवरमौक्तिकनासि
कभूषणवातचमत्कृत चंचल केमु
खकमलामलसौरभचंचलमत्तमधु
व्रतलोचनिके। मणिगणकुण्डललो

लपरिस्फुरदाकुल गण्डयुगामलके जय० ॥७॥ कलरवनूपुरहेममया ञ्चितपादसरोरुहसारणिके धिमिधिमिधिमिधिमिताल विनोदितमानवमंजुलपादगते। तवपद पंकज माश्रित मानवचित्तसदाखिलताप हरेजय० ॥८॥ भवोत्तापाम्भोधौ निपतितजनो दुर्गतियुतो यदिस्तौति प्रातः प्रतिदिनमनन्याश्रयतया हयाहृषैःकामं करकुसुमपुंजै रविसुतांसदा भोक्ताभोगान्मरणसमये याति हरितां ॥९॥ इतिश्रीमत्पर०

श्रीमच्छंकराचार्यविरचितं यमुनाष्टकं संपूर्णं ॥

अथ सरस्वत्यष्टकप्रारम्भः ।

श्रीगणेशाय नमः ॥ शतानीक उवाच ॥ महामते महाप्राज्ञ सर्वशास्त्रविशारद । अक्षीणकर्मबन्धस्तु पुरुषो द्विजसत्तम ॥१॥ मरणे यज्जपेज्जाप्यं यं च भावमनुस्मरन् । परं पदमवाप्नोति तन्मे ब्रूहि महामुने ॥२॥ शौनक उवाच ॥ इदमेव महाराज पृष्टवांस्ते पितामहः । भीष्मं धर्मविदां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥३॥

युधिष्ठिर उवाच ॥ पितामह महा
प्राज्ञसर्वशास्त्रविशारद । बृहस्पति
स्तुता देवि वागीशाय महात्मने ।
आत्मानं दर्शयामास सूर्यकोटिस
मप्रभं ॥ ४ ॥ सरस्वत्युवाच ॥ वरं
वृणीष्व भद्रं ते यत्ते मनसिवर्तते ।
बृहस्पतिरुवाच ॥ यदि मे वरदा दे
वि दिव्यज्ञानं प्रयच्छ नः ॥५॥ दे
व्युवाच ॥ हंत ते निर्मलं ज्ञानं कुम
तिध्वंसकारकं । स्तोत्रेणानेन ये भ
क्त्यामां स्तुवन्ति मनीषिण:॥६॥
बृहस्पतिरुवाच ॥ लभते परमंज्ञानं

यत्सुरैरपिदुर्लभं । प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥७॥ सरस्वत्युवाच ॥ त्रिसन्ध्यं प्रयतो नित्यं पठेदष्टकमुत्तमं । तस्य कंठे सदा वासं करिष्यामि न संशयः ॥८॥ इति श्रीपद्मपुराणे दिव्यज्ञानप्रदायकं सरस्वत्यष्टकस्तोत्रं सम्पूर्णं ॥

अथ पुष्कराष्टकमारम्भः ।

श्रीगणेशाय नमः ॥ श्रियायुतं त्रिदेहतापपापराशिनाशकं मुनीन्द्रसिद्धसाध्यदेवदानवैरभिष्टुतं । तटेऽस्ति यज्ञपर्वतस्य मुक्तिदं सुखाक

रं नमामि ब्रह्मपुष्करं सवैष्णवं सशंकरं ॥१॥ सदार्यमासशुष्कपंचवासरेवरागतं तदन्यथांतरिक्षगं सुतत्रभावनानुगं । तदम्बुपानमज्जनं हशांसदामृतारकं नमामि० ॥२॥ त्रिपुष्कर त्रिपुष्कर त्रिपुष्करेतिसंस्मरेत्मदूरदेशगोऽपि यस्तदङ्गपापनाशनं । प्रसन्नदुःखभंजनं सुरंजनं सुधाकरं नमामि० ॥३॥ मृकण्डुमंकणौपुलस्त्यकण्वपर्वतासिता अगस्त्यभार्गवादधीचिनारदौशुकादयः। सपद्मतीर्थपावनैकदृष्टयोदया

करे न०॥४॥सदापितामहेक्षितंवरा हविष्णुनेक्षितं तथाऽमरेश्वरेक्षितंसु रासुरैःसमीक्षितं । इहैवभुक्तिमुक्ति दं प्रजाकरं घनाकरं नमामि०॥५॥ त्रिदण्डदण्डब्रह्मचारि तापसः सु सेवितं पुरार्द्धचन्द्रप्राप्तदेवनन्दिके श्वराभिधैः । सवैद्यनाथनीलकण्ठ सेवितं सुधाकरं नमामि० ॥६॥ सु पंचधा सरस्वती विराजते यदन्तरे तथैकयोजनायतं विभाति तीर्थना यकं । अनेकदैवपैत्रतीर्थसागरं रसा करं नमामि० ॥७॥ यमादिसंयुतो

नरास्त्रिपुष्करं निमज्जति पितामह
श्च माधवोप्युमाधवः प्रसन्नताम् ।
प्रयाति तत्पदं ददात्ययत्नतो गुणा
करं नमामि० ॥८॥ इदंहि पुष्करा
ष्टकं सुनीतिनीरजाश्रितं स्थितं म
दीयमानसं कदापिऽमाऽपगच्छतु ।
त्रिसन्ध्यमापठन्ति ये त्रिपुष्कराष्ट
कंनराः प्रदीप्तदेहभूषणा भवन्ति
मेशकिंकराः ॥ ८ ॥ इति श्रीपुष्क
राष्टकं समाप्तम् ॥

अथ श्रीमणिकर्णिकाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । त्वत्तीरम

णिकर्णिकेहरिहरौ सायुज्यमुक्तिप्र
दौ वादन्तौकुरुतःपरस्परमुभौ ज
न्तोःप्रयाणोत्सवे । मद्रूपोमनुजोऽ
यमस्तुहरिणा प्रोक्तःशिवस्तत्क्षणा
त्तन्मध्याद्भृगुलाञ्छनो गरुडगः पी
ताम्बरानिर्गतः ॥१॥ इन्द्राद्यास्त्रि
दशापतन्तिनियतं भोगक्षये ये पु
नर्जायन्ते मनुजास्ततोपि पशवः
कीटाःपतंगादयः । ये मातर्मणिक
र्णिके तव जले मज्जन्तिनिष्कल्म
षाः सायुज्येऽपि कीरीटकौस्तुभध
रा नारायणाःस्युर्नराः ॥२॥ काशी

धन्यतमा विमुक्तिनगरी सालंकृता गंगया तत्रेयं मणिकर्णिकासुखकरी मुक्तिर्हि तत्किंकरी । स्वर्लोकस्तुलितः सहैव विबुधैः काश्यासमं ब्रह्मणा काशीक्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥३॥ गंगातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः । देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः प्राप्यते ॥४॥ दुःखाम्भोनिधिमग्न

जन्तुनिवहो स्तेषांकथंनिष्कृतिर्ज्ञा
त्वा तद्धि विरंचिना विरचिता वारा
णसी शर्मदा। लोकाःस्वर्गसुखास्त
तोपि लघवो भोगान्तपातप्रदाःका
शीमुक्तिपुरी सदा शिवकरी धर्मार्थ
कामोत्तरा ॥५॥ एकोवेणुधरोधरा
धरधरः श्रीवत्सभूषाधरो योप्येकः
किलशंकरोविषधरो गंगाधरोमाध
वः। येमातर्मणिकर्णिकेतवजले म
ज्जन्तितेमानवा रुद्रावाहरयोभव
न्तिबहवस्तेषां बहुत्वंकथम् ॥६॥
त्वत्तीरेमरणंतुमंगलकरं देवैरपिश्ला

द्यते शक्रस्तं मनुजं सहस्रनयनैर्द्र ष्टुंसदातत्परः । आयान्तं सविता सहस्र किरणैः प्रत्युद्गतोऽभूत्सदा पुण्योऽसौवृषगोऽथवागरुडगः । किं मन्दिरंयास्यति ॥७॥ मध्यान्हेम णिकार्णिकास्नपनजं पुण्यंनवक्तुंक्ष मः स्वीयैरब्दशतैश्चतुर्मुखसुरा वे दार्थदीक्षागुरुः । योगाभ्यासवलेन चन्द्रशिखरस्तत्पुण्यपारं गतस्त्व त्तीरे प्रकरोतिसुप्तपुरुषं नारायणं वाशिवं ॥८॥ कृच्छ्रैःकोटिशतैःस्व पापनिधनं यच्चाश्वमेधैःफलं तत्स

वैमणिकर्णिकास्नपनजे पुण्येप्रवि
ष्टंभवेत् । स्नात्वास्तोत्रमिदंनरःप
ठति चेत्संसारपाथोनिधिं तीर्त्वाप
ल्वलवत्प्रयाति सदनं तेजोमयं ब्र
ह्मणः ॥९॥ इति श्रीमच्छंकराचार्य
विरचितं मणिकर्णिकाष्टकं स० ।

अथ प्रयागाष्टकप्रारम्भः ।

श्रीगणेशाय नमः । मुनयऊचुः ।
सुरमुनिदितिजेन्द्रैः सेव्यते योऽस्त
तन्द्रैर्गुरुतरदुरितानां काकथामान
वानाम् । सभुविसुकृतकर्तुर्वांछि
तावाप्ति हेतुर्जयति विजितयाग

स्तीर्थराजःप्रयागः ॥१॥ श्रुतिःप्रमा
णंस्मृतयः प्रमाणं पुराणमप्यत्रपरं
प्रमाणम् । यत्रास्ति गंगा यमुना
प्रमाणंस तीर्थराजो जयति प्रयागः
॥२॥ न यत्रयोगाचरणप्रतीक्षा न
यत्र यज्ञेष्टिबिशिष्टदीक्षा । न ता
रकज्ञानगुरोरपेक्षा स तीर्थराजो ज
यति प्रयागः ॥ ३ ॥ चिरं निवासं
न समीक्षते यो ह्युचदारचित्तःप्रददा
तिचक्रमात् । यःकल्पितार्थांश्चददा
ति पुंसांसती० ॥४॥ यत्राप्लुतानां
न यमो नियन्ता यत्र स्थितानां

सुगतिप्रदाता। यत्राश्रितानाम मृ
तप्रदातासती० ॥ ५ ॥ पुर्यःसप्तप्र
सिद्धाःप्रतिवचनकरीस्तीर्थराजस्य
नार्यौ नैकट्यान्मुक्तिदाने प्रभवति
सुगुणाकाश्यतेब्रह्मयस्यां। सेयंरा
ज्ञीप्रधानाप्रियवचनकरीमुक्तिदाने
नयुक्ता येनब्रह्माण्डमध्ये स जयति
सुतरां तीर्थराजः प्रयागः ॥६॥ ती
र्थावलीयस्यतुकण्ठभागे दानावली
वल्गतिपादमूले। व्रतावली दक्षिण
पादमूले स ती० ॥ ७ ॥ आज्ञापि
यज्ञाःप्रभवोपियज्ञाःसप्तर्षिसिद्धाः

सुकृतानभिज्ञाः । विज्ञापयन्तः स
ततं हि काले स ती० ॥८॥ सिता
सिते यत्र तरंगचामरे नद्यौ विभा
ते मुनिभानुकन्यके । लीलातपत्रं
वटं एव साक्षात्सती० ॥९॥ तीर्थ
राजप्रयागस्यमाहात्म्यं कथयिष्य
तः । शृण्वतःसततं भक्त्यावाञ्छि
तं फलमाप्नुयात् ॥ १० ॥ इति श्रीम
त्स्यपुराणेप्रयागराजमाहात्म्याष्ट
कं समाप्तम् ॥

अथ काशीपञ्चकमारम्भः ।

श्रीगणेशाय नमः ॥ मनोनिवृ

त्तिः परमोपशान्तिः सातीर्थवर्यामणिकर्णिका च । ज्ञानप्रवाहा विमलादिगंगा सा काशिकाहं निजबोधरूपा ॥१॥ यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासं । सच्चित्सुखैका परमात्मरूपा सा का० ॥२॥ कोशेषु पंचस्वधिराजमानाबुद्धिर्भवानी प्रतिदेहगेहं । साक्षी शिवः सर्वगतान्तरात्मा सा का० ॥३॥ काश्यांहिकाशतेकाशी काशी सर्वप्रकाशिका । सा काशी विदिता येन तेन प्रप्ताहिकाशिका

॥४॥ काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगंगा भक्तिःश्रद्धागयेयं निजगुरुचरणध्यानयोगः प्रयागः। विश्वेशोयं तुरीयः सकलजनमनः साक्षिभूतोऽन्तरात्मा देहे सर्वं मदीये यदि वसतिपुनस्तीर्थमन्यत्किमस्ति ॥५॥ इति श्रीमच्छंकराचार्यविरचितं काशीपंचकंसं०

अथ संकटानामाष्टकम्।

श्रीगणेशाय नमः ॥ ॐ नारद उवाच ॥ जैगीषव्य मुनिश्रेष्ठ सर्वज्ञ सुखदायक। आख्यातानि सुपु

ण्यानि श्रुतानि त्वत्प्रसादतः ॥१॥
न तृप्तिमधिगच्छामि तववागमृते
न च । वदस्वैकं महाभाग संकटा
ख्यानमुत्तमं ॥ २ ॥ इति तस्य व
चः श्रुत्वा जैगीषव्योऽब्रवीत्ततः । सं
कष्टनाशनंस्तोत्रं शृणुदेवर्षिसत्तम
॥३॥ द्वापरेतु पुरावृत्ते भ्रष्टराज्यो
युधिष्ठिरः । भ्रातृभिःसहितो राज्य
निर्वेदं परमं गतः ॥४॥ तदानीं तु
ततः काशीं पुरीं यातो महामुनिः ।
मार्कण्डेय इति ख्यातः सह शिष्यै
र्महायशाः ॥५॥ तं दृष्ट्वा स समु

स्थाय प्रणिपत्य सुपूजितः । कि
मर्थं म्लानवदन एतत्त्वं मां निवेद
य ॥६॥ युधिष्ठिर उवाच ॥ संकटं
मे महत्प्राप्तमेतादृग्वदनं ततः ।
एतन्निवारणोपायं किंचिद्ब्रूहि मु
ने मम ॥७॥ मार्कण्डेय उवाच ॥
आनन्दकानने देवी संकटानाम वि
श्रुता । वीरेश्वरोत्तरभागे पूर्वं चन्द्रे
श्वरस्य च ॥ शृणु नामाष्टकं तस्याः
सर्वसिद्धिकरं नृणां । संकटाप्रथमं
नाम द्वितीयं विजया तथा ॥ ९॥
तृतीयं कामदा प्रोक्तं चतुर्थं दुःखहा

रिणी । शर्वाणी पंचमं नामषष्ठंका
त्यायानी तथा ॥१०॥ सप्तमं भी
मनयना सर्वरोगहराऽष्टमं । नामा
ष्टकमिदं पुण्यं त्रिसन्ध्यंश्रद्धयान्वि
तः ॥११॥ यःपठेत्पाठयेद्वापि नरो
मुच्येत संकटात् । इत्युक्त्वातुनर
श्रेष्ठमृषिर्वाराणसीं ययौ ॥१२॥ इ
ति तस्य वचः श्रुत्वा नारदोहर्षनि
र्भरः । ततः संपूज्य तां देवीं वीरेश्व
रसमान्वितां ॥ १३ ॥ भुजैस्तु दश
भिर्युक्तांलोचनत्रयभूषितां । माला
कमण्डलुयुतां पद्म शंखगदायुतां ।

॥१४॥ त्रिशूलडमरुधरांखड्गचर्म विभूषितां । वरदाभयहस्तां तांप्र णम्य विधिनंदनः ॥१५॥ वारत्रयं गृहीत्वातु ततो विष्णुपुरंययौ । ए तत्स्तोत्रस्य पठनं पुत्रपौत्रविवर्धनं ॥१६॥ संकष्टनाशनं चैव त्रिषु लो केषु विश्रुतं । गोपनीयं प्रयत्नेन म हावंध्याप्रसूतिकृत् ॥१७॥ इतिश्री पद्मपुराणो संकटानामाष्टकं सं० ॥

सत्यव्रतोक्तदामोदरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सिन्धुदेशोद्भ वो विप्रोनाम्ना सत्यव्रतासुधीः । वि

रक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकं ॥ १ ॥ वृन्दावने स्थितः कृष्णमारराध दिवानिशं । निःस्वःसत्यव्रतो विप्रो निर्जने व्यग्रमानसः ॥ २ ॥ कार्तिके पूजयामास प्रीत्या दामोदरं नृप तृतीयेऽन्हि सद्भक्त्ये पत्रं मूलं फलं तथा ॥ ३ ॥ पूजयित्वा हरिंस्तौति प्रीत्या दामोदराभिधं ॥ ४ ॥ सत्यव्रत उवाच । नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानं । यशोदाभियोलूखले धावमानं परामृष्टमत्यन्त

तो दृतगोप्या ॥५॥ रुदन्तंमुहुर्नेत्र
युग्मं मृजंतं कराम्भोजयुग्मेन सा
तंकनेत्रम् । मुहुः श्वासकंपत्रिरेखा
ङ्ककण्ठंस्थितंनौमि दामोदरंभक्तव
न्धम् ॥६॥ वरंदेवदेहीशमोक्षावधिं
वा न चान्यं वृणेऽहं वरेशादपीह ।
इदं ते वपुर्नाथगोपालबालं सदामे
मनस्याविरास्तां किमन्यैः ॥७॥
इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं
कुन्तलैः स्निग्धवक्रैश्च गोप्या । मु
हुश्चुम्बितं बिम्बरक्ताधरं मे मन
स्याविरास्तामलं लक्षलाभैः ॥८॥

नमो देव दामोदरानन्त विष्णो प्र
सीद प्रभो दुःखजालाब्धिमग्नं। कृ
पादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहा
णेशमामज्ञमेवाक्षिदृश्यम् ॥९॥ कु
वेरात्मजौवृक्षमूर्ती च यद्वत्त्वयामो
चितौ भक्तिभाजौकृतौ च। तथाप्रे
मभक्तिं स्वकांमे प्रयच्छ नमोक्षेग्र
होमेऽस्तिदामोदरेह ॥१०॥नमस्ते
सुदाम्ने स्फुरद्दीप्तधाम्ने तथोदर
स्थविश्वस्य धाम्नेनमस्ते। नमोरा
धिकायै त्वदीयप्रियायै नमोनंतली
लाय देवाय तुभ्यं ॥११॥ नारद उ

वाच ॥ सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरोहरिः । विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥१२॥ इति श्रीसत्यव्रतकृतं दामोदरस्तोत्रं सम्पूर्णम् ॥

अथ दशावतारस्तोत्रम् ।

श्रीगणेशाय नमः । चलल्लोल कल्लोल कल्लोलिनीशः स्फुरन्नक्र चक्रातिवक्राम्बुलीनः । हतोयेनमीनावतारेणशंखः सपायादपायाज्जगद्वासुदेवः ॥१॥ धरानिर्जराराति भारादपाराद कूपारनीरातुराधः पत

न्ती । धृताकूर्मरूपेण पृष्ठोपरिष्टे स देवो मुदेवोऽस्तु शेषांगशायी ॥ २ ॥ उदग्रेरदाग्रेसगोत्रापि गोत्रा स्थिता तस्थुषः केतकाग्रे षडंघ्रैः । तनोति श्रियं स श्रियं नस्तनोतु प्रभुः श्री वराहावतारो मुरारिः । उरोदारआ रम्भ संरंभिणोसौ रमासंभ्रमाभंगु राग्रैर्नखाग्रैः । स्वभक्तातिभक्त्या भिव्यक्तेन दारुण्यघौघं सदा वः स हिंस्यान्नृसिंहः ॥४॥ छलादाकल य्य त्रिलोकीं बलीयान् बलिं संबबंध त्रिलोकीवली यः । तनुत्वं दधानां

तनुं संदधानो विमोहं मनो वामनो वः स कुर्यात् ॥५॥ हतक्षत्रियासृक्प्रपाभप्रमत्तप्रनृत्यत्पिशाचप्रगीतप्रतापः । धराकारि येनाग्रजन्माग्रहारं विहारं क्रियान्मानसे वः स रामः ॥६॥ नतग्रीवसुग्रीवसाम्राज्यहेतुर्दशग्रीवसंतानसंहारकर्तुः । धनुर्येन भग्नं महत्कामहेतुः समं जानकीजानिरेनांसि हन्तु ॥७॥ घनाद्रोधनं येन गोवर्धनेन व्यरक्षि प्रतापेन गोवर्धनेन । हताराति चक्री रणध्वस्तचक्री पदध्वस्तचक्री स नः पातु चक्री

॥८॥ धरावद्धपद्मासनस्थांघ्रियष्टि
र्नियम्यानिलंन्यस्तनासाग्रदृष्टिः ।
य आस्ते कलौ योगिनां चक्रवर्ती
सबुद्धःप्रबुद्धोऽस्तु निश्चिंतवर्ती ॥
॥९॥ दरापारसंसारसंहारकारी भ
वत्यश्वचारःकृपाणप्रहारी । मुरारि
र्दशाकारधारीहकल्की करोतु द्वि
षां ध्वंसनं वः स कल्की ॥१०॥ इ
ति श्रीमच्छंकराचार्यविरचितं द
शावतारस्तोत्रं सम्पूर्णम् ।
अथ आर्तत्राणनारायणाष्टादशकम् ।
प्रल्हाद प्रभुरस्ति चेत् तवहरिः

सर्वत्रमे दर्शय स्तंभे चैनमिति ब्रुव
न्तमसुरं तत्राविरासीद्धरिः । वक्ष
स्तस्य विदारयन्निजजनस्वैवात्सल्य
मावेद यन्नार्तत्राणपरायणः स भग
वान्नारायणोमे गतिः ॥१॥ श्रीरा
माय विभीषणोयमधुना त्वार्तो भ
यादागतः सुग्रीवानय पालयेहमधु
ना पौलस्त्यमेवागतं। एवं योऽभय
मस्य सर्वविदितं लंकाधिपत्यं ददा
वार्तत्राणपरायणः स भगवान्नारा
यणो मे गतिः ॥२॥ नक्रग्रस्तपदं
समुद्यतकरं ब्रह्मेश देवेश मां पाही

ति प्रचुरार्तरावकरिणं देवेश शक्ता
श च । मा शोचेतिररक्ष नक्रवदना
च्चक्रश्रिया तत्क्षणादार्तत्राणपराय
णः स भ० ॥३॥ हा कृष्णाच्युत हा
कृपाजलनिधे हा पांडवानांगते क्वा
सि क्वासि सुयोधनादवगतां हा
रक्ष मां द्रौपदीं । इत्युक्तोऽक्षयवस्त्र
रक्षिततनुं योरक्षदापद्गणादार्तत्राण
परायणः स भ० ॥४॥ यत्पादाब्ज
नखोदकं त्रिजगतां पापौघविध्वंस
नं यन्नामामृतपूरणं च पिबतां सं
तापसंहारकं । पाषाणश्च यदंघ्रितो

निजवधूरूपं मुनेराप्तवानार्तत्राण
परायणः स भ० ॥५॥ यन्नाम श्र
तिमात्रतोऽपरिमितं संसारवारांनि
धिं त्यक्त्वागच्छति दुर्जनोपि पर
मं विष्णोः पदंशाश्वतं । तन्नैवाद्भु
तकारणं त्रिजगतां नाथस्य दासो
स्म्यहमार्तत्राणपरायणः स भ० ६
पित्राभ्रातरमुत्तमांकगमितं भक्तो
त्तमं यो ध्रुवं दृष्ट्वातत्सममारुरुक्षुमु
दितं मात्रावमानंगतं । योदात् तं
शरणागतंतु तपसा हेमाद्रिसिंहास
नं ह्यार्तत्राणपरायणःस० ॥७॥ ना

धेनिश्रुतयो न तत्त्वमतयो घोषस्थि
ता गोपिकाजारिण्यः कुलजातिधर्म
विमुखा अध्यात्मभावं ययुः। भ
क्तिर्यस्य ददाति मुक्तिमतुलां जा
रस्य यः सद्गतिर्ह्यार्तत्राणपरायणः
स० ॥८॥ क्षुत्तृष्णार्तसहस्रशिष्यस
हितं दुर्वाससं क्षोभितं द्रौपद्या भय
भक्तियुक्तमनसा शाकं स्वहस्तार्पि
तं। भुक्त्वातर्पयदात्मवृत्तिमखि
लामावेदयन् यः पुमानार्तत्राणपरा
यणः स भ० ॥९॥ येनाराक्षि रघूत्त
मेन जलधेस्तीरे दशास्यानुजस्त्वा

यातं शरणं रघूत्तम विभो रक्षातुरं मामिति । पौलस्त्येन निराकृतोथ सदसि भ्रात्रा च लंकापुरे ह्यातंत्राणपरायणः स भ० ॥१०॥ येनावा हि महाहवे वसुमती संवर्तकाले महालीलाक्रोडवपुर्धरेण हरिणा नारायणेन स्वयं । यः पापिद्रुमसंप्रवर्तमचिराद्भुत्वा च योऽगात् प्रियमार्तत्राणपरायणः स भ०॥११॥ योद्धा सौभुवनत्रयेमधुपातिर्भर्ता नराणांवलेराधाया अकरोद्दते रतिमनःपूर्तिं सुरेंद्रानजः। योवा रक्षति दीनपा

ण्डुतनयान् नाथेतिभीतिं गतानार्त
त्राणपरायणः स भ० ॥१२॥ यः सां
दीपिनिदेशतश्च तनयं लोकान्तरा
त्संगतं चानीय प्रतिपाद्य पुत्रमर
णादुज्जृम्भमाणार्तये संतोषं ज
नयन्नमेयमहिमा पुत्रार्थसम्पादना
त् आर्तत्राणपरायणः स भ०॥१३॥
यन्नामस्मरणादघौघ सहितो वि
प्रः पुराजामिलः प्राणान्मुक्तिमशे
षितामनु च यः पापौघदावर्तिरुक्
सद्यो भागवतोत्तमात्मानिमार्ति प्रा
पाम्बरीषाभिध श्चार्तत्राणपराय

णः स भ० ॥१४॥ योरक्षद्वसनादि
नित्यरहितं विप्रं कुचैलाभिधंदीना
दीनचकोरपालनपरः श्रीशंखचक्रो
ज्ज्वलः । तज्जीर्णांवरमुष्टिमात्रपृ
थुकानादायभुक्त्वा क्षणादार्तत्राण
परायणः सभ०॥१५॥ यत्कल्याण
गुणाभिराममलं मन्त्राणि संशिक्ष
ते यत्संशेतिपतिप्रतिष्ठितमिदं वि
श्वं वदत्यागमः । यो योगीन्द्रमनः
सरोरुहतमः प्रध्वंसविद्वानुमानार्त
त्राणपरायणः स भ ० ॥ १६ ॥ का
लिंदीहृदयाभिरायपुलिने पुण्येजग

न्मंगले चन्द्राम्भोजवटे पुटे परिसरे धात्रासमाराधिते । श्रीरंगे भुजगेन्द्रभोगशयने शेते सदा यः पुमानार्तत्राणपरायणः स भ० ॥१७॥ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् । सेव्यः श्रीपतिरेव सर्वजगतामेते हि तत्साक्षिणः प्रल्हादश्चविभीषणश्चकरिराट्पांचाल्यहल्याध्रुवाः ॥१८॥ इति श्रीमच्छङ्कराचार्यविरचितमार्तत्राणपरायणनारायणाष्टादशकं संपूर्णः ॥

## अथ पंचमहायुधस्तोत्रम् ।

श्रीगणेशाय नमः । विष्णोर्मुखो
त्थानिलपूरितस्य यस्य ध्वनिर्दान
वदर्पहंता । तंपांचजन्यंशशिकोटि
शुभ्रं शंखं सदाहं शरणं प्रपद्ये ॥ १ ॥
स्फुरत्सहस्रारशिखातितीव्रं सुदर्श
नंभास्करकोटितुल्यं । स्फुरद्द्वि
षां प्राणविनाशदक्षं चक्रं सदाहंशर
णंप्रपद्ये ॥ २ ॥ हिरण्मयींमेरुसमान
सारां कौमोदकीं दैत्यकुलस्यहंत्री
म् । वैकुण्ठनाथस्य कराभिमृष्टां ग
दां सदाहं शरणं प्रपद्ये ॥ ३ ॥ रक्षोऽ

सुराणां कठिनोऽग्रकण्ठच्छेदोच्छल च्छोणितदिग्धधारं । तंनन्दकंनाम हरेःप्रदीप्तं खड्गंसदाहंशरणंप्रपद्ये ॥४॥ यस्यातिनादश्श्रवणात्सुराणां चेतांसि निर्मुक्तभयानिसद्यः । भवन्ति दैत्याशनिबाणवर्षं शार्ङ्गंसदाहं शरणंप्रपद्ये ॥५॥ प्रातर्हरेःपञ्चमहायुधानां स्तवंपठेद्यः कृतसर्वरक्षः । जीवेच्छतंसर्वजनैःसपूज्यो निर्वाणकाले विशतीह विष्णुं ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितंपंचमहायुधस्तोत्रं सम्पूर्णं ॥

अथ श्रीसीतारामस्तोत्रम् ।

श्रीगणेशाय नमः । अयोध्यापुरनेतारं मिथिलापुरनायिकां । राघवाणामलंकारं वैदेहानामलं क्रियां ॥१॥ रघूणांकुलदीपंच निमीनांकुलदीपिकां । सूर्यवंशसमुद्भूतं सोमवंशसमुद्भवां ॥२॥ पुत्रंदशरथस्यापिपुत्रींजनकभूपतेः । वसिष्ठानुमताचारं शतानन्दमतानुगामं ॥३॥ कौशल्यागर्भसंभूतं वेदिगर्भोदितां स्वयं । पुण्डरीकविशालाक्षं स्फुरदिन्दीवरक्षणां ॥४॥ चन्द्रकान्तान

नांभोजं चन्द्रबिम्बोपमाननां । म
त्तमातंगगमनं मत्तहंसवधूगतां ॥
॥५॥ चन्दनार्द्रभुजामध्यं कुंकुमा
र्द्रकुचस्थलीं । चापालंकृतहस्ता
ब्जं पद्मालंकृतपाणिकां ॥६॥ काल
मेघनिभाकारं कार्तस्वरसमप्रभां ।
शरणागतगोप्तारं प्रणिपातप्रसादि
नीं ॥७॥ सर्वलोकविधातारं सर्वलो
कविधायिनीं । लोकाभिरामंश्रीरामं
अभिरामांचमैथिलीं॥८॥ दिव्यसिं
हासनारूढौ दिव्यस्रग्वस्त्रभूषितौ
अनुक्षणकटाक्षाढ्यौ अन्योन्येक्षण

काांक्षिणौ ॥९॥ अन्योन्यसदृशाबे तौ त्रैलोक्यगृहदम्पती । इमौयुवां प्रणम्याहं भजाम्यथकृतार्थतां १० अनयास्तौतियोभक्त्या रामंसीतां चभक्तितः । तस्यतौतनुतोह्यतौ स पदःसकलाअपि ॥११॥ इतिश्रीरामचन्द्रस्य जानक्याश्चविशेषतः । कृतंहनुमतापुण्यं स्तोत्रंसद्योविमुक्तिदं ॥१२॥ यः पठेच्छृणुयाद्वापि सर्वपापैःप्रमुच्यते । लिखितंयोजपन्नित्यंसर्वान्कामानवाप्नुयात् १३॥ इति साम्राज्याभिषिक्तश्रीसीतारा

मच्चन्द्रस्तोत्रं सम्पूर्णं।

अथ व्यासाष्टकं।

व्यास उवाच । एको रुद्रो न द्वितीयोयतस्तद्ब्रह्मैवैकं नेहनानास्ति किंचित् । यद्यस्त्यन्यः कोऽपि वा कुत्रचिद्वा व्याचष्टे तद्यस्य शक्तिः समग्रा ॥१॥ यः क्षीराब्धेर्मंदराघातजातो ज्वालामालीकालकूटोतिभीमः । तं सोढुं वा कोऽपरोऽभून्महेशाद्यत्कीलाभिः कृष्णतामाप विष्णुः ॥२॥ यद्वाऽभूच्छ्रीपतिर्यस्ययन्तालोकेशो यत्स्यन्दनं भूः सम

स्ता । वाहावेदा यस्य येनेषुपाताद्
ग्धा ग्रामास्त्रीपुरास्तत्समः कः ॥
॥ ३ ॥ यं कन्दर्पो वीक्ष्यमाणः स
मानं देवैरन्यैर्भस्मजातः स्वयंहि ॥
पौष्पैर्बाणैः सर्वविश्वैकजेता को वा
स्तुत्य कामजेतस्ततोन्यः ॥४॥ यं
वै वेदोवेद नो नैव विष्णुर्नो वा वेधा
नो मनोनैव वाणी । तं देवेशं मादृ
शः कोऽल्पमेधा याथात्म्याद्वै वेत्य
हो विश्वनाथं ॥५॥ यस्मिन् सर्वंय
स्तु सर्वत्र सर्वो यो वै कर्त्ता योऽवि
ता योऽपहर्त्ता । नो यस्यादिर्यः सम

स्तादिरेकोनोयस्यान्तो योऽन्तकृत्तं नतोस्मि॥६॥यस्यैकाख्यावाजिमेधेनतुल्या यस्यानत्याचैकयात्येन्द्रलक्ष्मीः। यस्यस्तुत्या लभ्यते सत्यलोकोयस्यार्चातो मोक्षलक्ष्मीरदूरात्॥७॥ नान्यंदेवंवेद्म्यहंश्री महेशान्नान्यं देवं स्तौमिशंभोर्कृतेहं। नान्यंदेवंचानमामि त्रिनेत्रात्सत्यंसत्यं सत्यमेतन्मृषान॥८॥ इत्थं यावत्स्तौति शंभुंमहर्षिस्तावन्नंदी शंभवाद्दक्प्रसादात्। तद्दोस्तभं त्यक्तवांश्चावभाषे स्मायंस्मा

थेब्राह्मणेभ्योनमोवः ९ नन्दिकेश्वर उवाच ॥ इदंस्तवं महापुण्यंव्यास तेपरिकीर्तितं । यःपठिष्यातिमेधावी तस्यतुष्यति शंकरः ॥१०॥ व्यासा ष्टकमिदंप्रातः पठितव्यंप्रयत्नतः । दुःस्वप्नपापशमनं शिवसान्निध्य कारकं ॥ ११ ॥ इति व्यासाष्टक स्तोत्रं संपूर्णं ॥

अथ दण्डपाणिस्तोत्रम् ।

श्रीः ॥ रत्नभद्रांगजोद्भूत पूर्ण भद्रसुतोत्तम । निर्विघ्नंकुरुमेयक्ष काशीवासं शिवाप्तये ॥१॥ धन्यो

यक्षः पूर्णभद्रो धन्या कांचनकुण्ड
ला । ययोर्जठरपीठे भूर्दंडपाणेमहा
मते ॥२॥ जय यक्षपते धीर जयपिं
गललोचन । जय पिंगजटाभार ज
यदण्डमहायुध ॥ ३ ॥ अविमुक्तम
हाक्षेत्रसूत्रधारोग्रतापस । दण्डना
यक भीमास्यजयविश्वेश्वरप्रिय४॥
सौम्यानांसौम्यवदन भीषणानांभ
यानक । क्षेत्रपापधियांकालमहाका
लमहाप्रिय ॥ ५ ॥ जयप्रणाद्यक्षे
न्द्र काशीवासाद्यमोक्षद । महारत्न
स्फुरद्रश्मिचयचर्चितविग्रह ॥६॥

महासंभ्रान्तिजनक महाद्भ्रांतिप्र
दायक। अभक्तानांचभक्तानांसंभ्रा
न्त्युद्भ्रांतिनाशक ७प्रांत्यनेपथ्यच
तुर जयज्ञाननिधिप्रद । जयगौरी
प्रियतम मोक्षेक्षणविचक्षण ॥८॥ य
क्षराजाष्टकंपुण्यमिदंनित्यंत्रिकाल
तः। जपामिमैत्रावरुणो वाराणस्या
तिकारणं ॥९॥ दण्डपाण्यष्टकं धी
मान् जपन्विघ्नैर्न जातुचित् । श्र
द्धयापरिभूयेत काशीवासफलंलभे
त् ॥१०॥

इति दण्डपाणिस्तोत्रं सं० ॥

